॥ श्रीः ॥

# कमलाविजयनाटकम्

अयं ग्रन्थः

निवृत्तमहीशूरदेशीयसंस्कृतशालोपद्रष्टृपदेन चन्नरायपत्तनाभिजनेन

श्रीवेङ्कटरमणार्येण

विरचितः

मैसूरु

राजकीयशाखामुद्रालये सम्मुद्रितः

१९३८

॥ श्रीः ॥

# कमलाविजयनाटकम्

अयं ग्रन्थः

निवृत्तमहीशूरदेशीयसंस्कृतशालोपद्रष्टृपदेन चेन्नरायपत्तनाभिजनने

श्रीवेङ्कटरमणार्येण

विरचितः

मैसूरु

राजकीयशाखामुद्रालये सम्मुद्रितः

१९३८

## Opinion by Dr. Ganganatha Jha, *Ex*-Vice-Chancellor of Allahabad University.

I have had the pleasure of meeting Pandit C. Venkataramanaiya of Bangalore, and listening to his poems. It is a great consolation to find among us such writers of Sanskrit. His poems bear true mark of the true poet, and bear testimony to his wonderful command over the language, and its niceties. I hope he will find a publisher for his works. Works like his deserve to live; it would be a pity if they are lost for want of publicity.

*28th August 1933.* GANGANATHA JHA.

---

HARDUTT SHARMA,
M.A., Ph.D.,
Professor of Sanskrit.

S. D. College,
Cawnpore,
*7th November 1933.*

DEAR MR. C. VENKATARAMANAIYA,

I have had the great honour of reading with you your compositions in Sanskrit. Your drama "Kamalavijaya" is not only replete with the technique of drama, but is full of poetic excellence and charm. Your command over the language, grammar and metrics is wonderful. It would be a great loss to Sanskrit literature if your work remains unpublished for lack of funds. It is only people like you who entirely disprove the malicious slur that our own brethren cast on Sanskrit by calling it a *dead language*. If new poetry and drama like yours are being daily created, then who can deny that Sanskrit is a living language? I pray to God that ways and means be found to enable others also to taste the sweetness of your poetry.

In the end I tender my homage to your learning and remain ever.

*Yours sincerely*,
H. SHARMA.

# अभिमतम्.

विदितमेतत्समेषां सहृदयानां, यत्काव्येषु नाटकं रम्यमित्यभियुक्तोक्तदिशा, दृश्यकाव्यानां रचने प्रेक्षणे च प्रेक्षावतां प्रवृत्तिस्स्वारसिकीति । प्रायेण च भारतरामायणादीतिहासस्थकथामवलंब्यैव दृश्यकाव्यप्रणयनं निश्चप्रचम् । केचन कवयः अग्निमित्रवत्सराजचन्द्रगुप्तादिचक्रवर्तिकथामप्यवलंब्य नाटकादिदृश्यकाव्यानि प्राणैषुः । द्वीपान्तरस्थपार्थिवान्वा तत्सबंन्धिनो वा सेनापत्यादीनुद्दिश्य दृश्यश्रव्यकाव्यनिर्माणं प्रायो विरळमिति भास्वन्मतीनां सुमनसामतिरोहितमेतत् । सम्प्रति हि बेंगळूरुचामराजेन्द्रसंस्कृतमहापाठशालायामध्यक्षपदमलंकृतवता विश्रान्तमहीशूरदेशीयसंस्कृतसर्वशालावेक्षकाधिकारवता चेन्नरायपत्तनाभिजनेन वेङ्कटरमणार्येण आङ्लसार्वभौमास्थानगणनीयगुणगणभ्राजिष्णुना आल्फ्रेड् टेनिसन् नामकपाश्चात्यविपश्चिता विरचितं कप्नामकं दुःखपर्यवसायि द्व्यङ्कं प्रेक्षणकं संस्कृतभाषायां परिवर्त्य भारतीयनाटकसमुदाचारसमयादिसंयोजनेन परिष्कृत्य स्वप्रतिभापरिकल्पितनूत्नविषयान् तत्तद्रसास्वादसमुचितसंविधानपाकरीतिवृत्यलङ्कारांश्च प्रकटीकृत्य, धर्मशास्त्रनीतिशास्त्रादिपरिशीलनसुसंस्कृतस्वान्तानां पण्डितप्रकाण्डानां प्रवृत्यौपयिकत्वेन अङ्कपञ्चकपरिकर्मीणं **कमलाविजयं** नाम नाटकं निरमायि । एतच्च नाटकमामूलाग्रमवालोकि । क्वचित्क्वचित्परिष्करणोपयोगि साहाय्यं चाचरितम् । आधुनिकानां पाश्चात्यविपश्चित्समयानुवर्तिनां विमर्शकानां पण्डितानां च संमोदावहं कमलाविजयं नाम नाटकम् भारते द्वीपान्तरे च विख्यातरसिकस्वान्तसमाकर्षकं विश्वविद्यालयविपश्चिद्वरेण्यगणनीयमहिमास्पदं भूयादित्याशासे ॥

साहित्यरत्नं के. गोपालकृष्णशास्त्री,

मैसूरु.

# ANNOUNCEMENT

Copyright of this work is not reserved by the author, as the work is solely intended for the general enlightenment. So, if more copies are required at any time, any individual or agency may get the work re-printed in any number of copies, without claiming copyright to the work. If, however, a commentary in Sanskrit, or notes, or translation in any language is written on, and affixed to the work, then copyright may, justly and rightly, be claimed and reserved by any individual or by any Educational Institution or by any other agency.

MYSORE, 26th Dec. 1937. — C. VENKATARAMANAIYA, *Author.*

# INDEBTEDNESS

I am greatly indebted to the Government of His Highness the Maharaja of Mysore for kindly showing to me some concession in getting my Sanskrit works printed at half the cost in the Government Branch Press at Mysore.

MYSORE, 26th Dec. 1937. — C. VENKATARAMANAIYA, *Author.*

# प्रकटनम्

एतद्ग्रन्थसंबन्धाधिकारः कोऽपि ग्रन्थकर्त्रा न स्वायत्तीकृतः। तस्माद्यदा कदा वाऽप्यधिकानि पुस्तकान्यपेक्षितानि भवन्ति, तदा यस्य कस्य वा एतन्नाटकस्य पुनर्मुद्रणकार्ये भवति निरर्गलोऽधिकारः। परन्तु ग्रन्थस्य स्वायत्तीकरणे न तस्याधिकारः। तथाप्ययं ग्रन्थः, व्याख्यासमेतो वा विवरणसहकृतो वा भाषान्तरपरिवर्तनपरिष्कृतो वा यदि भवेत्, तदा तद्व्याख्यादिकर्तुः, तत्प्रतिनिधेः, विश्वविद्यापीठादेः, कस्य वा तदितरसमाजादेः, तादृशव्याख्याद्युपेतस्यास्य ग्रन्थस्य न्यायतः स्वायत्तीकरणपूर्वकमेव सर्वे मुद्रणाद्यधिकाराः निश्चिताः ग्रन्थकर्तृसम्मताश्च भवन्ति ॥

मैसूरु,
२६–१२–१९३७.

श्री. वेङ्कटरमणार्यः,
ग्रन्थकर्ता.

# कृतज्ञता

समयेऽस्मिन् एतद्ग्रन्थसंशोधनादिकार्ये, साहाय्यमाचरितवतां श्रीमन्महीशूरमहाराजस्य आस्थानमहाविदुषां साहित्यरत्नं कन्नंबाडि गोपालकृष्णशास्त्रिणां, मुद्रणकाले अक्षरस्खलनादिदोषशोधनकार्ये सहायभूतानां आस्थानविदुषां सोसले कृष्णस्वामिशास्त्रिणां, सदसद्व्यक्तिपूर्वकं स्वाभिमतप्रदर्शकानां विमर्शकानां च, कृतज्ञो भूत्वा सप्रश्रयमभिवन्दनसन्ततिं समर्पयेऽहम् ॥

मैसूरु,
२६–१२–१९३७.

श्री. वेङ्कटरमणार्यः,
ग्रन्थकर्ता.

# उपोद्घातः

अथेदानीमत्र प्रेक्षावतामवबोधार्थमिदमावेद्यते । आंग्लभाषात्मक-वाङ्मयप्रपञ्चे यानि दिव्यानि रत्नानि सन्ति, तानि संस्कृतभाषागारे सङ्कलय्य, संरक्ष्य, तत्प्रदर्शनेन भारतीयानां चित्ताकर्षणद्वारा, हर्षवर्षणं प्रवर्षणीयमित्यादिसदुदारोद्देशसंपन्नेन मित्रवर्येण प्रेरितोऽयं जनः, आंग्लसार्वभौमास्थानालङ्कृतेन आल्फ्रेड् टेनिसन् नामकमहाकविना (Alfred Tennyson) विरचितं अङ्कद्वयमात्रपरिष्कृतं दुःखपर्यव-सायि (Tragic) कप् नामकं (The Cup) नाटकं संस्कृतभाषया निरूपयितुमुद्युक्तस्सन्, भारतीयनाटकरचनासम्प्रदायानुसारेण एतन्ना-टकं सुखान्तात्मकमापादयितुं, यथासन्दर्भं नवरसान् सम्मेलयितुं च, तत्र तत्र स्वमतिकल्पितान् नूतनविषयान् गर्भीकृत्य, पञ्चमाङ्कस्थं याव-त्कथावस्तु स्वप्रतिभोन्मेषेण निर्माय, सुसंविधानेन पञ्चाङ्कात्मकं पति-व्रताविजयप्रधानं धर्मबोधकं "कमलाविजया" भिधानमेतन्नाटकं रचि-तवान् ॥

अत्रच, रामसदृशो धीरोदात्तो नायकः, रावणसदृशो धीरोद्धतः प्रतिनायकः, सीतासदृशी पतिव्रताशिरोमणिर्नायिका, पाश्चात्यदेशेति-हासप्रसिद्धमितिवृत्तमिति, आद्यन्तभागयोस्संभोगश्रृङ्गारः, मध्ये, विप्र-लम्भश्रृङ्गार इति, श्रृङ्गार एव प्रधानो रसः शते पञ्चाशदंशभूतः, अन्ये-

ष्वंगभूतेषु रसेषु, वीररसष्षडंशात्मकः, करुणरसो दशांशपरिमितः, अद्भुतरसोऽष्टांशविशिष्टः, हास्यरसस्त्र्यंशयुतः, भयानकरसष्षडंश-नियमितः, भीभत्सरसस्त्र्यंशमात्रः रौद्ररसोऽष्टांशकलितः, शान्तिरस-ष्षडंशयुक्त इति रसविभागश्च, सूक्ष्ममतीनां मतिमवगाहते खलु। अन्याश्च मुखप्रतिमुखादिसन्धयः, तेषां यथोचितान्यङ्गानि, उपमाद्याः केचिदलङ्काराः, वैदर्भीकल्परीतिः, सात्वतीसदृशवृत्तिः, इत्येवमाद्याः कविसम्मताः काव्यगुणाः, नाटकाङ्गानि च, यान्यत्र सन्ति, तानि विवेचनावसरे, सुमनसां विमर्शकानां व्याख्यातॄणां च बुद्धौ सुविशदं प्रस्फुरन्त्येव ॥

प्रमादादिवशादत्र दोषाः केचिद्यदि भवेयुः, तदा तेषां समीकरणमेव कर्तव्यं, न तु दोषैकदर्शनम्, नाप्युदासीनतेति, कृतिकर्तुस्सविनयमभ्यर्थनम् ॥

पञ्चमाङ्के तावदुल्लिखिता भौतिका आध्यात्मिकाश्च विशेषविषयास्सर्वे, वेदशास्त्रसम्मता इति सुधियो विभावयन्तु ॥

एतत्पठनपाठनादिना यस्य कस्य वा यत्किंचिज्ज्ञानप्रयोजनं भवेच्चेत्तदेव कवितोद्यमस्य महत्फलमिति भावयत्ययं कविः। एतावानेव कथनीयांशसंग्रहः ॥

श्रीवेंकटरमणार्यः,

ग्रन्थकर्ता.

# शुद्धाशुद्धपत्रिका:

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ४ | १३ | भयहरिणि | भयहारिणि |
| ,, | १७ | से वकः | सेवकः |
| ६ | २ | ललनाशिरोमणि | ललनाशिरोमणिः |
| ९ | २० | १६ | २६ |
| १० | ९ | प्रन्थान | पन्थान |
| ,, | १७ | नाहमघुना | नाहमधुना |
| ११ | २ | ॥ २६ ॥ | ॥ २६ प ॥ |
| १३ | १२ | द्विगुणतरंविभाति | द्विगुणतरं सा विभाति |
| १४ | ११ | ॥ ३४ ॥ | ॥ ३४ (प) ॥ |
| १७ | २० | विंशतिसा | विंशतिस्सा |
| १९ | ४ | कृते ते | कृते तेन |
| ,, | ५ | निवर्ततं | निवर्तत |
| ,, | २३ | प्रियसम्व | प्रियसख |
| २८ | २१ | पुरस्ता ृश्यते | पुरस्ताद्दृश्यते |
| ,, | २२ | मारवन्ति | मारुवन्ति |
| ३० | १ | श्रुतंश्रुतं | श्रुतं श्रुतम्, |
| ,, | ३ | त्रागता | त्राऽऽगता |
| ३३ | २३ | सन्दग्धरागार्भटात् | सन्दग्धरागोत्कटात् |
| ३४ | २१ | का ललना | कास्का ललना |
| ३५ | १३ | सर्वै | सर्वे |
| ३६ | १३ | सेवकाः | सेविकाः |

| पुटः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६ | १७ | सेवका | सेविका |
| ३७ | ६ | वागच्छति | वाऽऽगच्छति |
| ,, | १२ | प्रगल्भ्यते | प्रगल्भते |
| ,, | २० | ग्राह्यकेव | ग्राहिकेव |
| ३८ | ६ | क्रियातां | क्रियतां |
| ३९ | ७ | राशौ | राशौ |
| ,, | १२ | विजाऽनेहं | विजानेऽहं |
| ३९ | २३ | धर्मः | धर्मः, |
| ४१ | २ | मत्खड्गेनापादितं | मत्खड्गेनाऽऽपादितं |
| ,, | १२ | सेवके | सेविके |
| ,, | १८ | सेवकाभिः | सेविकाभिः |
| ४१ | १९ | (श्रूयतेसर्वे . . . .) | श्रूयते (सर्वे . . ) |
| ४१ | २१ | (प्रभवतीं) | (प्रभावतीं) |
| ४२ | १५ | सेवका | सेविका |
| ४२ | २० | ॥ ९ ॥ | ॥ ११ ॥ |
| ४८ | १४ | ॥ ११ ॥ | ॥ १२ ॥ |
| ५१ | ३ | मन्निवृतये | मन्निर्वृतये |
| ,, | ६ | अस्थिन्यस्थि | अस्थन्यस्थ |
| ५३ | ४ | अधिशेये | अधिशये |
| ,, | ६ | सेवकाभि | सेविकाभि |
| ५६ | ७ | जलसुपूरा | जलसुपूरा |
| ,, | १२ | सेवकाभ्यः | सेविकाभ्यः |
| ५७ | १८ | ततः | ततस्ततः |
| ,, | २३ | भ्रूम्यां | भूम्यां |
| ५८ | १२ | परम् | परन्तु |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | २२ | प्रारब्धैः स्स | प्रारब्धैस्स |
| ६० | ३ | जन्मभिः | जन्मिभिः |
| ६२ | ९ | चिद्वैवर्ण | चिद्वैवर्ण्य |
| ६४ | ३ | सर्वोपराधः | सर्वोऽपराधः |
| ६७ | ४ | स्समाढ्या | स्सदाढ्या |
| ,, | १३ | मामादो | मामोदो |
| ६८ | १४ | पाद्यास्मभ्यः | पाद्याऽस्मभ्यः |
| ६९ | २ | भूयात् | भूयाः |
| ६९ | १३ | ययाज्ञापयति | यथाज्ञाऽऽपयति |
| ७१ | २ | सेवकाः | सेविकाः |
| ,, | १८ | ॥ | ॥ २६ ॥ |
| ,, | २० | ॥ | ॥ २७ ॥ |

———

# एतन्नाटकस्थपात्राणां विवरणम्

---

## पुरुषपात्राणि

श्रीनाथः (Synoratus)–नायकः.

शीर्णाक्षः (Synorix)–प्रतिनायकः.

अनन्तानीकः (Antonicus)–सेनानायकः.

स्त्रीरतः (Synotus)–गुप्तमृगयुवेषधारी प्रतिनायकः.

धर्मरतः–राजगृहसेवकः.

प्रबलः–प्रतिनायकसेवकः.

सिद्धपुरुषः–योगीश्वरः.

महेन्द्रः–स्वर्गाधिपः.

इन्द्राग्नियमनैर्ऋतिवरुणवायुकुबेरेशानाः–अष्टदिक्पालकाः.

देवर्षिमन्त्रिसचिवमुखाः–स्वर्गवासिनः.

सचिवनागरकदूतादयः–गालटेयराजधानीनिवासिनः.

खेटदूताद्यः–मृगयाक्रीडानुयायिनः.

## स्त्रीपात्राणि

कमला (Comma)–नायिका.

प्रभावती–नायिकायाः प्रियसखी.

विलासिन्यादयः–कमलाऽऽवासदास्यः.

योगिनी–ब्रह्मवादिनी.

वृद्धतापसी–देवीगृहधर्मदर्शिनी.

सख्यः–देवीगृहसेविकाः.

शची–महेन्द्रमहिषी.

---

# एतन्नाटकेतिवृत्तपरिचयः

———

## प्रथमाङ्के—प्रथमदृश्यम्.



## द्वितीयदृश्यम्.

## तृतीयदृश्यम्.

## द्वितीयाङ्के—प्रथमदृश्यम्.



## द्वितीयदृश्यम्.



## तृतीयदृश्यम्.



## तृतीयाङ्के—प्रथमदृश्यम्.

## द्वितीयदृश्यम्



## पञ्चमाङ्के—प्रथमदृश्यम्



## द्वितीयदृश्यम्.



———

॥ श्रीः ॥

॥ सच्चिदानन्दपरब्रह्मणे नमः ॥

# कमलाविजयनाटकम्.

## प्रथमोऽङ्कः

### प्रथमदृश्यम्—गालटेयनगरप्रान्तदेशः.

नान्दी—

साध्वी वाणीन्दिरार्येत्यमलगुणमयी चित्कला लोकमाता
वाणीशश्रीशगौरीपतिविहिततनुं संश्रिता तत्परेशम् ।
वक्षोरःपार्श्वदेशे परहरणभयादीहते यस्य भद्रं
दाम्पत्यं सौख्यमेतु त्रिदशपुरगतं पूतनारीनराणाम् ॥१॥

(नान्द्यन्ते सूत्रधारः)

(प्रविश्य) धन्योऽहमद्य विविधविद्याविशारदानां रसभाववेदिनां आर्यमिश्राणां समागमसन्दर्शनेन । महापरिषदेषा केनापि सरसवस्तुना रूपकेण सम्भावयितुमुचिता । एषा खलु—

सुमनस्सेव्यमानाऽस्ति बुधेड्या कविसंस्तुता ।
गुरुपूज्याऽवलाराध्या सुधर्मेव वृषाश्रिता ॥ २ ॥

(विलोक्य) ससंभ्रमं (स्वगतम्) कुतोवाऽत्र प्रविशति नटी.

(प्रकाशं) आर्ये ! इत इतः.

नटी—-आर्य ! छायेवाहं त्वामेवाऽनुवर्ते किमाज्ञापयसि,

सूत्रधारः—आर्ये! अत्र मदागमनात् प्रभृति किमप्याश्चर्यं दृष्टं वा श्रुतं वा त्वया?

नटी—आर्य! इदानीमेव अत्राऽऽगच्छन्त्या मया, "बलाराध्या सुधर्मे" ति, किमपि श्रुतम्; इदमेवाश्चर्यम्।

सूत्रधारः—किमत्राश्चर्यस्य बीजम्।

नटी—सुधर्मा बलारात्याराध्येति श्रूयते कथं बलाराध्येति।

सूत्रधारः—आर्ये! न विदितः किल त्वयाऽत्र चमत्कारः, यथा सुधर्मा, शचीरम्भोर्वशीप्रमुखाभिरबलाभिर्भूषिता, तथैवेयं सभा, कलावतीभिर्ललितगानविनोदिनीभिर्ललनाभिरप्यलङ्कृतेति।

नटी—तर्हि "अबलाराध्येति" किं तवाकूतम्?

सूत्रधारः—अथ किम्।

नटी—स्थाने हि तत्।

सूत्रधारः—अद्य केनापि रसाभिव्यञ्जकवस्तुना आराध्येयं सभा। तद्गीयताम् वसन्तलक्ष्मीसौभाग्यं किमपि।

नटी—"तथेति" गायति।

जयति वसन्तो विविधविलासै-
र्विहितसुमोदो बहुविधकरणैः॥ ३॥
गायति कोकिलमिथुनं मधुरं
पञ्चमतानसुशोभितगीतम्।
कोविदबालाकरधृतवीणा
क्वणति गुणान्वितरागविशेषा॥ ४॥
पुष्प्यति चूतो बहु मकरन्दं
वर्षति षट्पदबृन्दं नीडे।

रात्राविन्दुस्तपनसमानो
यूनां मानसमर्मविभेदात् ॥ ५ ॥
क्रीडति तोषाद्बालकदम्बं
विद्याशालाविरतिविधानात् ।
विहरति शैलेष्वात्तनिवासं
धनचयमहितं राजकदम्बम् ॥ ६ ॥
प्रातर्वाञ्छति सेवकवर्गो
नियमितकार्ये विहितोद्योगम् ।
सुरनराहितदाः शुभकरदिवसाः
साधुजनादृत धर्मविशेषाः ॥ ७

सूत्रधारः—अहह! आर्ये तव गीतामृतेन आनन्दपरवशेयं सभा। परमेषा, केनापि दृश्यवस्तुना नयनपारणां चिकीर्षतीव दृश्यते। तत् पाश्चात्यदेशकविशिरोमणिना सार्वभौमास्थानकविना तन्निषण्णाळिप्रौढेन विरचितस्य 'तीर्थपात्र'नामाङ्कितनाटकस्य, सारभूतस्य महीशूरधरावल्लभपरिपालितेन कल्याणपुरराजकीयसंस्कृतमहापाठशालाध्यक्षेण श्रीवेङ्कटरमणेन संस्कृतभाषया संस्कृतस्य कमलाविजयनाटकस्य, अभिनयेन परितोषयितव्येयम् परिषत् ॥

नटी—आर्य! कुशीलवैरत्र पूर्वरङ्गः प्रवर्तित एव, मत्सख्योपि, भगवतीं दाक्षायणीमुद्दिश्य गायन्तीव श्रूयते।

सूत्रधारः—तर्हि आगच्छ, आवामप्यत्रापेक्षितैः परिकरैः सज्जीभवाव।

(इति निष्क्रान्तौ)

इति प्रस्तावना

(ततः काश्चिल्ललना दाक्षायणीगृहे देवीपूजापरायणाः भगवतीं प्रस्तुत्य गायन्त्यः प्रविशन्ति)

देवि दाक्षायणि ते नमो नमो
गौरि ! देवि दाक्षायणि ते नमो नमो (देवि)
आर्ये । पायाः ॥ ८ ॥ (देवि)
मायातीते । मायाध्यक्षे ॥ ९ ॥ (देवि)
अपर्णे प्रसन्ना । सदा त्वं भवेत्थम् ॥ १० ॥ (देवि)
सर्वाधाराम् शर्वाधाराम् । त्वामर्चामो युक्ता भक्त्या ॥११॥
(देवि)
शङ्करि नस्त्वं सम्सृतिदुःखम् ।
भञ्जय दुर्गे सन्तनु सौख्यम् ॥ १२ ॥ (देवि)
भवतरणिर्नो भवतरुणि त्वम् ।
भवतरणेऽस्मानव करुणाढ्या ॥ १३ ॥ (देवि)
कुमारजननि त्वं सुमानय सदार्तान् ।
कुमानपरिभूतान् समानगुणदीप्तान् ॥ १४ ॥ (देवि)
हरिसोदरि भवतोषिणि भयहरिणि कृपया
परिपालय भवदाश्रितजनतामिह गिरिजे ।
सुदतीमणि परिसेवित पदभूषितभवने
कमलाजयसुगुणावनपरिपोषकवरदे ॥ १५ ॥ (देवि)

[अत्रान्तरे शिलावत्यां पद्यायां द्राक्षाफलान्युद्धरन् सेवकः कश्चित्परिदृश्यते तत्रैव रम्यकसेना बन्दिजनमेकमनुपालयन्ती परिचलति ॥ ]

(ततः प्रविशति शीर्णाक्षः)

[शीर्णाक्षः परितोऽवलोकयति । गीतं विरमति । ]

शीर्णाक्षः—अहो रमणीयता अस्या नगर्याः, इदं हि सरलसालताल-

हिन्तालकपित्थाश्वत्थप्रभृतिभिर्भूरुहैः, कुन्दकुरवककर्णिकारशिरीषजातीमल्लिकादिभिर्लतावितानैश्च अभितोऽलंकृता, कमलावासयोग्या शोभते। अत्र च—

देशादस्मात् प्रधावंस्त्रिशरदधिकृतो रम्यकान् यावदासं
तावत्स्पृष्ट्वेव गातुं स्वसुहृदनुगता स्वेष्टदेवीं प्रयाता।
सा मे भाग्यं हि देवास्तदहमनुगतस्तत्पुरं तां च भूयो
दैवात् सिद्धं ममेष्टं मयि कलयति चेत् प्रेमदृष्ट्या प्रिया सा॥

(पर्यालोच्य) हे हृदय! कुतो वितर्कयसि सा ऊढा वा न वेति! सा हि, देशेऽस्मिन् इदानीमधिकृतेन श्रीनाथेन पाणिगृहीत्येव। किमेतावता पश्य—

रम्यार्थं द्रोहचिन्तां कलयति स यदाऽखर्वगर्वेण दृप्तः
श्रीनाथं सापराधं निगडयति तदा हन्ति वा रम्यभूपः।
पश्चात्तद्बोधदुष्टान् गलितमतिबलान् दुर्जनान् सन्निगृह्य
स्वाम्यर्थं शासनेऽस्मिन् सुचिरमधिकृतस्स्वेष्टलाभं भजेहम्॥

(किंचिदालोच्य) अहो दौष्ट्यदृप्तप्रकृतयः! कदाचिदहं युष्मान् अस्थिगतप्राणान् कर्तुमुद्युक्तः खलु अथवा अलमेतेन व्यवसायस्मरणेन। यतः—

लोकयात्राऽल्पमात्रेह मत्सरान्वेषणेन किम्।
समीहितफलप्राप्त्या कार्यार्थी स्याद्‌द्वयापरः॥ १८॥

(आत्मनिकटस्थं पात्रं दृष्ट्वा)

इदं हि तीर्थपात्रम्, एतद्दर्शनेनातीव मन्मथाविष्टो भवामि।

(तीर्थपात्रं कवचस्थपत्रिकां च करतलमानीय)

'मयात्र पत्रिकायां किं लिखितम्।' (स्वयंवाचयति)

'श्रीमत्समस्तकल्याणगुणगणभूषिता, लोकोत्तरसुन्दरी, श्रीनाथशरीरार्धाऽङ्गभागिनी, ललनाशिरोमणिकमलाभिधरमणी, रम्यकनलसेवकेन गालटेयेन एवं विज्ञाप्यते —

अयं जनः, पुरा कदाचित् आर्तमातरं भगवतीं दाक्षायणीं, स्वयमर्चन्तीं भवतीं दूरान्नयनपथं प्रापयन्, प्रेमरसेनाभ्यषिञ्चत् किल। इदानीमस्मत्पाणिग्रहणोपयुक्तं देवपूजायोग्यमिदं पात्रमुपहारीकरोति। कस्माचिद्धुताशनास्यगतात् देवगृहाद्रक्षितमिदं पात्रं रम्यकसेनाभिस्सह तत्प्रदेशेषु पर्यटता मयाऽवाप्तम्। समयेऽस्मिन् बहुविधप्रार्थनाऽसमर्थेन मया प्रणयपूर्वकं प्रेषितमिदमङ्गीकृत्य सेवकजनोऽयमनुगृह्यताम्' इति।

(सेवकं दृष्ट्वा)

सेवक! किं ते नाम?

**सेवकः**—हे महाभाग! मम पितरौ पञ्चमे संस्कारे "धर्मरत" इति नाम्ना मामलंचक्रतुरिति जानीहि।

**शीर्णाक्षः**—भो धर्मरत! किं जानासि श्रीनाथस्य निकेतनम्?

**धर्मरतः**—आर्य! अंबिकालयसमीपवर्तिने श्रीनाथमन्दिरायैव द्राक्षाफलान्येतानि।

**शीर्णाक्षः**—किं तत्र? (इत्यङ्गुल्या निर्दिशति)

**धर्मरतः**—आम् प्रभो!

**शीर्णाक्षः**—(स्वगतम्) कामिनीजनमनोवृत्तिवेदिना मया सा साक्षान्मुखतो द्रष्टुमनुचिता। (प्रकाशम्) हे धर्मरत! इयं पत्रिका, इदं पात्रं च श्रीनाथगृहिणीसविधं नीयतां त्वया।

**धर्मरतः**—सा श्रीनाथेन मृगयार्थं गच्छन्ती वा गता वा भवति।

**शीर्णाक्षः**—तन्नाचिन्त्यम्। पात्रमेतदादाय तद्गृहद्वारे निवेशय।

(इति पात्रं पत्रिकां च सेवकहस्ते निक्षिपति)

धर्मरतः—यथाज्ञापयत्यार्यः इति (द्राक्षाफलपिटकमादाय निष्क्रान्तः)

अनन्तानीकः—गच्छन्तं सेवकं दृष्ट्वा (स्वगतम्) कुत्र कुतो वा गच्छति सेवकः। (शीर्णाक्षं प्रति) प्रियसख! शीर्णाक्ष! किं तदेव पात्रं यत्त्वया हुताशनात् परिरक्षितम्?

शीर्णाक्षः—सत्यं प्रेषयाम्यहमेतत् सदा धर्मरतायै श्रीनाथकान्तायै। भो प्रियमित्र! मन्ये बहुकालात् अदत्तकरमासादयितुं सेनाभिः सह तवात्रागमनमिति।

किन्तु—

'श्रीसार्वभौमाश्रितगालटेयाः श्रीनाथदर्पान्नृपभक्तिशून्याः'।
एवं जनो दर्शयितुं न कश्चिच्छक्नोति मा भूदिति ते वितर्कः॥

एतत्पावनपात्रमेव तद्गृहप्रवेशार्थमवलम्बनम्। अनेन तत्प्रदातुः साश्लेषं स्वागताभिनन्दनं भवति।

अनन्तानीकः—अहो कृत्यवित्! तव व्यवसाये यदि भवेत् कार्यसिद्धिः, तदा त्वं कृती भवसि।

यतः—

राज्यतन्त्रसमाजेन पाददेशाधिकारिणाम्।
अन्योन्यकलहेर्ष्याद्यं रम्यायां सुसमीक्षितम्॥ २०॥
तत्पदेष्वेकमेवार्हं कृतज्ञं देशपालकम्।
नियोक्तुमीक्षते रम्या त्वमेवार्हसि तत्पदम्॥ २१॥

किं च रम्यायां प्रवृत्तेयं जनश्रुतिः यत् शीर्णाक्षोऽचिरात् सामन्तसिंहासनमलङ्करिष्यतीति।

शीर्णाक्षः— किमात्थ! देशपालक इति, सिंहासनमिति, जनश्रुतिरिति!

अनन्तानीकः—शिरःकम्पनेनानुमोदते।

शीर्णाक्षः—तर्हि ।

रभसमाश्रितगालटभूभर-
स्तदनुपालनसेवकलाच्छनः ।
सुमतिरम्यकभूपतिवत्सलः
प्रियतरोऽथ भवाम्यपि रम्यकात् ॥ २२ ॥

भो ! मित्रवर्य ! कार्यान्तरं तावत् साधयावः (इति निष्क्रान्तौ) ।

द्वितीयदृश्यम्—काननसन्निवेशः.

(पुनः शीर्णाक्षानन्तानीकौ प्रविशतः)

शीर्णाक्षः—(परावृत्य, आगच्छन्तीं कमलां पश्यन्) दूरमपसर दूरमपसर । अत्रैवागच्छति सा कल्याणी (इति सख्या मधुराङ्ग्या सहागतां कमलां निरीक्षते) ।

कमला—सखि ! मधुराङ्गि ! कुत्र गतोऽयम् ।

मधुराङ्गी—प्रियसखि !

जानासि त्वं पर्वते वारिपातं भागीभूतं ग्रीष्मके, सागराभम् ।
वर्षासारैर्मग्नतच्छृङ्गबृन्दं तत् पञ्चाशन्मानवीयप्रमाणम् ॥२३॥

कमला—किं तत्रास्त्ययं हरिणः ?

मधुराङ्गी—पूर्वस्मिन्दिने, अस्तङ्गते भगवत्यंशुमालिनि, मया स कुरङ्गः अधस्ताद् गुल्मतो दृष्टः ।

कमला—साधु सखि ! साधु ! तर्हि आवां पर्वतादवरुह्य मृगयां निरीक्षावहै । (इति शिलोच्चयादवरुह्य निष्क्रान्ते) ।

शीर्णाक्षः—तां समीक्ष्य (सस्पृहम्) ।

स्तनावस्या जाताविह निरुपमौ सृष्टिनिवहे
भ्रुवोर्बोधात् कामो निजधनुरतुल्यं कलयते ।

मुखं चान्द्रीमाभामधरयति तां क्षीणमलिनां
वपुर्धत्ते स्रष्टुं रतितनुमलं कान्तिलहरीम् ॥ २४ ॥

तदस्याः प्रत्यङ्गोल्लेखनेन किं ?

तन्वीमेनां विधाय स्वकृतिसफलताऽवाप्तिहेतुं गुणाढ्यां
लावण्यश्रीनिदानं विधिरवयवशः पूर्वमादर्शकल्पाम् ।
पश्चान्नारीजनानां प्रतिकृतिकरणे प्रार्थितां कान्तिलक्ष्मीं
विम्बाल्लब्ध्वा यथेष्टं परिकलितयशा भाति सौन्दर्यसर्गे ॥

अनन्तानीकः—शीर्णाक्ष ! कुतस्तां तथा कौतुकेन पश्यसि ?

शीर्णाक्षः—कालेनेयमन्यथाकृतमनोरथा वेति ।

अनन्तानीकः—(साकूतम्) तां किमुपरिग्रहीष्यासि ?

शीर्णाक्षः—श्रीनाथेन सहास्याःपाणिग्रहे भृशं स्पर्धे ।

अनन्तानीकः—किं तज्जानात्येषा ?

शीर्णाक्षः—न जानाति, तया मन्मुखमपि नावलोकितम् ।

अनन्तानीकः—श्रीनाथेनापि किं तन्नविदितम् ?

शीर्णाक्षः—न तेनापि ।

अनन्तानीकः—हे कामाग्निसन्दग्ध !

वार्तेयं प्रसृता हि रम्यकपुरे मत्कर्णपूर्णं श्रुता
दुर्वृत्तोऽत्र बहिष्कृतो गुरुजनैस्स त्वं कुलाद्बन्धुभिः ।
साध्वीनां व्रतनाशकल्मषकलानैपुण्यधामेत्यहो
भूपानां कुलपांसनोऽधृतयशाऽऽपूर्वं यथा तारकः ॥ १६ ॥

शीर्णाक्षः—भवतु यदीत्थं तर्हि तारक इवाहमपि किरीटप्रासये प्रतिनिवर्तिष्ये ।

**अनन्तानीकः**—यदि रम्यायास्तादृशी राजितसरलसरणिर्नानुरुध्यते, तर्हि त्वया तारकेणेव सत्यं पराभूयते। परं त्वं मारहतकेन समाविष्टचेताः कामानलसंतापेन व्यत्यस्तमतिः, आत्मानमेव न स्मरसि। रम्यायास्त्वयि सम्भावितगौरवं निमज्जयसीति को वा संशयः।

**शीर्णाक्षः**—ही! ही! न तथा, न तथा, कामिनीषु सर्वदाऽहं विजयी खलु। रम्यकसार्वभौमे मम नृपनिष्ठा अन्यादृशीति जानीहि।

**अनन्तानीकः**—(स्वगतम्) गर्हयेऽहमिमं। अस्मद्राज्यतन्त्रसभा जुगुप्सार्हैरेतादृशैः सहायैः किं वा करिष्यति? तथापि तदाज्ञाधारकोऽहम्। (प्रकाशम्) शिवास्ते प्रन्थानस्सन्तु।

**शीर्णाक्षः**—स्वस्त्यस्तु प्रियसुहृदे।

**अनन्तानीकः**—(गच्छन्तं शीर्णाक्षं निरुध्य) प्रियसुहृन्मणे! शीर्णाक्ष! किञ्चिदाकर्ण्यताम्। त्वं श्रीनाथमवस्कन्दितुं तस्मिन् राजद्रोहमन्विष्यसि यदि, आज्ञापत्रमिह ते ददामि। (पत्रिकां दर्शयित्वा) 'रम्यकसेनानायकोऽनन्तानीक' इति नामाङ्कितेन एनां प्रमाणपदमधिगमये। (इति तत्र हस्ताक्षराणि लिखति)

**शीर्णाक्षः**—(पत्रमादाय गच्छन्) क्वासि प्रिये! (परिभाव्य) हा! नाहमधुना विवेकशून्यः। मृगया पुनस्तरसा नाभिसर्तव्या। (नेपथ्ये) जालम्! जालम्! श्रीनाथ! श्रीनाथ! इत्याक्रोशति कश्चित्। ततः कश्चित् शृङ्गमाधमति।

**शीर्णाक्षः**—(रङ्गस्थलाद्दूरमालोक्य) स एषः रूक्ष इव, बालिश इवात्रागच्छति—

निर्धार्यते ननु तुषात्फलमन्तरस्थं
नारीजने कुटिलताप्रणयाभिभूते।

विस्रम्भते किमु तथा जनता सहर्षं
प्रायः स्त्रियः प्रियरता विहितात्मकामाः ॥ २६ ॥

अहं श्रीनाथेन सङ्गम्य, तस्मात् किञ्चित्फलमधिगच्छामि पुनस्तामनुसरामि। अथवा अद्यैव ताम्। भवतु तेन सह के वर्तन्ते? मत्परिचितं कस्यचिन्मुखमपि न दृश्यते किल! किमात्मानं गर्ते पातयामि? अथवा, यदहमधुना रम्यकः, तन्मां स्प्रष्टुमपि ते न प्रभवन्ति। तर्हि यथाकामं व्याप्रिये।

(ततः प्रविशति मृगयुभिर्मृगयाश्वभिश्च संयुतः श्रीनाथः)

शीर्णाक्षः—स्वस्ति महाभाग! अयं ते सुदिवसः। अस्मिन् कान्तारे मृगयाविनोदकुतुकिनस्ते अयं रम्यकः कथं दृष्टिगोचरो भवति?

श्रीनाथः—अथ किम्। किमनेन? मया सह तव को व्यवसायोऽस्ति?

शीर्णाक्षः—अहमाखेटकेष्वतिनिपुणः, मृगयाक्रीडायामतिचतुरः अनुज्ञातश्चेदपरिचितोऽपि त्वामस्मिन् व्यापारे अनुगन्तुमिच्छामि।

श्रीनाथः—त्वं किंनामधेयोऽसि?

शीर्णाक्षः—मां स्त्रीरत इत्याह्वयन्ति।

श्रीनाथः—तन्न रम्याभिधानम्।

शीर्णाक्षः—प्रभुवर्य! वयं गृह्यका गालवाश्च भवामः।

(नेपथ्ये दूरात् कोलाहलः शृङ्गध्वनिश्च श्रूयते)

श्रीनाथः—अहह! अहह! हरिणोऽयम्! हरिणोऽयम्! (शीर्णाक्षं दृष्ट्वा) किं त्वं निरायुधः? सेवकाः! प्रयच्छत तस्मै एकं शरासनं शरांश्च।

(इति वदन् मृगयुभिः सह निष्क्रान्तः)

**शीर्णाक्षः**—(स्वगतम्) लब्धावकाशेनापि यावन्मनोरथाधिरोहणम् अतन्द्रितसाहसिकेन मया भवितव्यम् । अन्यथा स्वेष्टमर्यादातीतस्य तमसाऽऽवृतस्य पदस्खलनमपि प्रत्याशाभञ्जनेन भ्रान्तिदायकं किल भवति ।

(नेपथ्ये दूरात् पुनः कोलाहलध्वनिः शृङ्गध्वनिश्च)

**शीर्णाक्षः**—हो! हो! हो! इति मृगयामनुसरन् निष्क्रामति ।

(नेपथ्ये भूयोऽपि कलकलारावः शृङ्गध्वानिश्च)

## तृतीयदृश्यम्—श्रीनाथस्य भवनम्.

(ततः प्रविशन्ति कमलावासनिवासिन्यो दास्यः)

**तास्वेका विलासिनी**—(तत्सौधं निर्वर्ण्य) अहो रमणीयताऽस्य भवनस्य! एता भित्तयः पुना रजतेष्टकाभिस्संङ्घटिता इव दृश्यन्ते।

(भित्तिषु लिखितानि चित्राणि दृष्ट्वा)

श्लाघ्यान्येतानि चित्राण्यवयवभरितान्याप्तभावश्चितानि
प्रान्तोद्यानाद्रिगुल्मग्रथिततरुलतासिन्धुसम्पातवन्ति ।
वर्णैरुन्निद्रिताङ्गस्फुरितमृगगजव्याघ्रसिंहाश्वगोभि-
र्हंसक्रौञ्चाहिबर्हिप्रकरशुकपिकैर्भासितान्यत्र सन्ति ॥२७॥

**अन्या हेमलता**—इदमपरं सौभाग्यम्—

शुभे हैमे मञ्चे मृदुमसृणशय्या सुखकरी
करण्डे संपूर्णा विलसति सुधेयं सुरुचिरा ।
सहद्राक्षापात्रैश्चषकनिचयस्सांघ्रिफलके
पुरोपात्तं पात्रं नुतपरिकरैः शोभितमिदम् ॥ २८ ॥

**अपरा ललिताङ्गी**—सख्यः पश्यत! पश्यत! नेत्रसेचनकमत्र—

भद्रासनमिदं भाति क्षौमालङ्कृतिभूषितम् ।
महाराजोपवेशार्हं चतुष्पदविराजितम् ॥ २९ ॥

अपरा हंसगामिनी—प्रियसुहृदः! पश्यतेदमास्तरणम्—

सदा भाति भूमौ कुथारङ्गवल्ली
क्रियालङ्कृतेव स्त्रिया कोमलाङ्ग्या ।
सुसंचारशीलाङ्गनापादकान्त्या
प्रदीपालिभासो भवन्तीह वर्णाः ॥ ३० ॥

इतरा कलावती—अहो! अत्र वाणीमुखविलासः!

मञ्जूषिकालङ्कृतिहेतुभूता ग्रन्थाश्वविज्ञानविचारयोग्याः ।
प्राचीनविद्वत्कृतिपुष्पभासो राजन्ति विद्यापरकल्पवृक्षाः ॥

प्रथमा विलासिनी—किं बहुना सख्यः!

कमलाश्रिता हि कमला द्विगुणतरं विभाति भवने स्वे ।
आदर्शादृतकमला शतशो भवतीति तच्चित्रम् ॥ ३२ ॥

कलावती—अस्मद्गृहिण्या भागधेयं लोकोत्तरतरम् । इदानीमेव साऽत्रा-
याति मृगयापरिश्रान्तं स्वरमणं विविधविलासैराश्वासयितुं ।
इदानीं—

चण्डकरेऽस्तंयाते राजानं कौमुदीयमनुसरति ।
जयलक्ष्मीरिव वीरं प्रकृतिप्रीतिरिव साध्वीं ताम् ॥ ३३ ॥

इत्यन्योन्यं विनोदयन्त्यो दास्यः तत्र प्रविशन्तीं कमलां दूरा
दृष्ट्वा सरभसं निष्क्रान्ताः ।

(ततः प्रविशति कमला)

कमला—(वातायनास्तृतान् पटानुत्क्षिप्य) अहो! चिरादपि श्रीनाथो

गृहं नागतः कुतो विलम्बते। भगवानयं कुमुदिनीबान्धवो गगनतलमलङ्करोति।

(पर्यङ्के उपविश्य वीणामङ्कतलमानीय सरसगीतमनुवादयति)

गीतं—

उदयति रजनीशः क्षालयन् तामसौघं
धवलयति करौघैर्भूमिभागानशेषान्।
स्थलजलवियदाद्यं भेदशून्यं वितन्वन्
जनमिह हितवस्त्वन्वेषणे भ्रान्तियुक्तम्॥ ३४॥

हे कुमुदिनीबान्धव! कुतो वा मामनाथां करोषि—

पालयात्र मां सोम सौम्य भो कान्तमालयं प्रापय प्रभो।
पालयात्र मे कान्तमापदः सौख्यदायकं गेहमानयन्॥३४॥

मेषसंयुतं मेषपालकं कोकरक्षितं त्वं कुरुप्रियम्।
प्रीतिकारिणे सौख्यदायिने चन्द्र ते नमो देहि मङ्गलम्॥३५॥

(किञ्चिदाकर्ण्य)

अये! किमयमागतः? तस्य पदन्यासः आकर्णित इव मया विभावितः। (सनिश्वासं), स नेदानीमागच्छति; यतः "वृको रम्याभ्युदयहेतुः" इति किल प्रतीतिः, अद्य मत्कान्तेन वृकस्योपरि कोप्युपरोधः कृतो भवेदिति वेपते मे हृदयम्। हा! किं करोमि? क्व गच्छामि? सर्वं शून्यमिव मे प्रतिभाति किल? पशुपालकोयं रम्यां स्वप्नेपि न कलयति खलु, हे प्राणवल्लभ!

भद्रमस्तु मत्प्रेमधारिणे क्षेममस्तु ते प्राणकान्त मे
कोकरक्षितो गोष्ठमेहि भो पापशङ्किनीं पालय प्रभो।

यत्प्रपाततः कानने पुरा व्याधशम्बराः सारमेयिनः
पातमाप्नुवन् तत्प्रदेशतो दैवरक्षितो युङ्क्ष्व मां प्रियाम् ॥

(सोत्साहं) किमहं भ्रान्ताऽस्मि, अत्रैवागच्छति मत्प्रियः (इत्यागच्छन्तं श्रीनाथं निरीक्षते).

(ततः श्रीनाथः शीर्णाक्षेण सह प्रविशति)

**श्रीनाथः**—(सामर्षं) प्रियसेवक! स कुरङ्गो मया व्यापादित इति जानीहि.

**शीर्णाक्षः**—न तथा भवान् दूरादेवासीत्। अन्यदप्यस्ति कारणम्। ममैव शरः सम्यक् समीरणमनुयातः।

**श्रीनाथः**—तस्मिन् ममैव प्रहार इत्यहं सुदृढं प्रत्येमि।

**शीर्णाक्षः**—ममैवेत्यहमपि सुदृढं प्रत्येमि। (स्वगतं) अन्तर्हिते त्वयि तव मृगया मय्येव पतति।

**कमला**—अलमलं विवादेन आगच्छत! वयं हरिणार्थं न विवदेमहि। हे नाथ! त्वां प्रतिपालयन्त्या मे कालोऽयमतिदुस्सहोऽभूत्। तवापि दुस्सहतर इति मन्ये। उपविश्यताम्, भुज्यतां, भोजने तावत् प्रदर्श्यतां युवयोः स्पर्धा।

**श्रीनाथः**—न तथा न तथा। भुक्तमासीत्, इदानीमावां भृशं सन्तप्तौ, तत्पानीयमाहर।

**कमला**—(शीर्णाक्षं निर्दिश्य) अयमतिथिः कः?

**श्रीनाथः**—स्मीरत इति स्वयमेवाभिदधाति।

**कमला**—श्रीनाथाय, शीर्णाक्षाय च पानीयं ददाति, ततः स्वयमपि स्वीकरोति। (सर्वे पानार्थं पटान्तरं गत्वा, पुनः प्रविशन्ति)

श्रीनाथः—हे प्रिय ! क्षीरत ! त्वयि विश्वसिमि ।

शीर्णाक्षः—हे महाभाग ! त्वय्यपि विश्वसिमि ।

श्रीनाथः—कमलायै प्रेषितं पात्रं दृष्ट्वा, किमिदमत्र ?

कमला—इदं दिव्यं पात्रं मह्यमद्य प्रेषितं वर्तते । इदं देवपूजायोग्यं अनन्तानीकपालिते कस्मिश्चित्पत्तने, हुताशनमुखात् परिरक्षितमिति श्रूयते । अहो रम्यकानां समरसंरम्भः, मनुष्येष्वेव प्रसरति, न देवतास्विति विदितम् ।

शीर्णाक्षः—सत्यं सत्यं, यदा तत्पुरमनन्तानकिस्य प्रतिद्वन्द्वि बभूव । तदा स आग्नेयास्त्रं प्रयुयुजे । ततस्तत्पुरेण सह पवित्रतमं तद्देवतागृहमपि अकस्माद्धुतमभूत् ।

श्रीनाथः—अनेन पात्रेण सह सन्देशः को वाऽधिगतस्त्वया ?

कमला—अथ किं ? एनां पश्यत्वार्यः (इति पत्रिकां ददाति)

श्रीनाथः—(वाचयति) किमत्र लिखितमस्ति ? "ललनामाणिकमलाभिधरमणी, दूरान्नयनपथं प्रापयन् ! प्रेमरसेनाभ्यषिञ्चत्—अस्मत्पाणिग्रहणोपयुक्तमिदं पात्रं ! रम्यकबलसेवकेन ! गालटेयेन"

(इति कानिचित्पदान्युच्चैर्वाचयित्वा, रोषाक्रान्तो भूत्वा)

बलसेवक इति हृदयदारुणोयं लेखवादः । एतच्छ्रवणादपि कस्यचिद्वृक्षस्य शाखासु गलग्राहं पाशबद्धो भूत्वा, जलेषु निमग्नो भूत्वा आत्मानं नाशयितुं वरमिति मन्ये। बलेन मां सेवकं कर्तुं किं बलं प्रभवति ।

शीर्णाक्षः—हे भट्टारक ! इदानीं किं करिष्यसि ?

आक्रान्तं नगरं बहिः परिवृतैः सैन्यैर्महायोद्धभी
रम्याज्ञापरिपालकैः शतगुणाधिक्यैर्यथाऽस्मद्बलात् ।
मज्जेयुस्समराम्बुधौ तव कृते किं गालटेयाः परं
जीवेः किं नृपतेः पदे स्वधिकृतस्संस्थानदेशे चिरम् ॥

श्रीनाथः—(साक्रोशम्) किं संस्थानमिदं क्रियते ?

शीर्णाक्षः—अथ किं, बहुमन्तव्यस्ते आक्रोशः ; परन्तु अद्यैव करं प्रयच्छेति अनन्तानीकस्त्वां पृच्छति । के तेऽत्र सहायाः ? बृहद्धनो वा ? पङ्क्तिर्वा ? प्रबलगण्यो वा ? पुरा पूर्वदेशाधिपैस्सह अस्माकमासीत् सहायसङ्ग्रहः । यदिदानीं त्वं तादृशसहायसंपन्नो भवसि, तदा मम हस्तोऽत्र निवेश्यते । अधुना तव किं मतम् ?

श्रीनाथः —

नाहं करोमि विफलं मम शौर्यसारं
प्रत्येमि हा न सहसा मृगयातिथिं त्वाम् ।
काले पदद्वयमृगाः खलु मत्सहायाः
श्वानो यथा कृतधियो हृतगन्धशब्दैः ॥ ३९ ॥

शीर्णाक्षः—शृणु प्रभो ! श्रीनाथ ! कदाचिदहं मृगेन्द्रमृगयामपश्यम् । मृगयाक्रोशशब्दैरुद्वेजितस्स मृगेन्द्रो वनमध्यं गतः । तत्र स रोमाञ्चितकेसरः, उन्नमितकर्णः यावन्मृगयुं रौद्रदृष्ट्याऽपश्यत्, तावत् विंशतिसारमेयाः तं पदेऽदशन् । ततः पादव्रणपीडितः सिंहः स्वपादतलेन चतुरस्सारमेयान्निहत्य स्वकृत्यमजानन्नेव करालेक्षणेन तं मृगयुं निरीक्षमाणोऽतिष्ठत् ।

श्रीनाथः—किमनेन प्रलापेन ?

शीर्णाक्षः—न किमपि। यदि रम्यया सह तव वैरं भवति, तदा सा त्वां निपातयति ; तथापि सा राज्यतन्त्रसभामुखान्निवेदितव्यापारा स्वकृत्यं किमपि न जानाति । (स्वगतम्) एनं द्रवीभूतचेतसं करोमि। अथवा क्रोधाविष्टं करोमि। (प्रकाशम्) यदहमुपदिशामि तदियं सौन्दर्यानुगुणमनीषा कमलाप्यनुमोदते । तदित्थम्—

यदा शत्रुराजो बलाढ्यो बलीयान्
यदा स्त्रचर्भकादीन् सुपौरान्निहन्ति ।
तथाऽऽक्रामतीशो विदेशांस्तदीशान्
वरं गर्ह्ययुद्धाच्छरण्यं तमाप्तुम् ॥ ४० ॥

कमला—प्रियवल्लभ! अहमिदानीं शिशुत्व एव मृतिमापन्नं अस्मत्पुत्रं भृशं शोचामि। यद्यद्य यौवनमधिगतस्स अजीविष्यत्, श्रीनाथोप्यन्वमोदिष्यत, तदाऽहं तं रणरङ्गमुखे निर्विषादं निवेशयितुमसहिष्यत (इति तिष्ठति)। (पुनः किञ्चिदालोच्य) हा वीराग्रेसर! सम्यगिदमाकलय—

युद्धेर्ष्याजाड्यबद्धः परशरणमतिर्यो भवेत्तस्य देश-
स्स्वायत्तिं प्राप्य शत्रोः स्थितिरहिततया त्यक्तचारित्रभूमा ।
जेतुं वा रक्षितुं यस्समरपरिगतः कीर्त्यते साधुवादै
स्तन्वाते कीर्तिशोकौ जयपरिभवतो वंशजान् वीरसूनून् ॥

इदमपि सत्यमेव भवति—

पराभूतो यातो दिवमपिनृपो यत्समरगो
भवेत्तन्नामान्ते विजयकरमेवात्र विषये ।
निदर्शोऽद्रौ गूढश्चिरमुदितदीपोऽस्ति हुतभुक्
यशःकाये सोऽयं सुकृतचरितो जीवति परम् ॥ ४२ ॥

**श्रीनाथः**—साधु! प्रिये साधु! सत्यमभिहितं त्वया त्वं वीरमाता भवितुमर्हसि ।

**शीर्णाक्षः**—(प्रणम्य) हे महाशये तवाऽनुरोधे वर्तेऽहम् ।

**श्रीनाथः**—स शीर्णाक्षः रम्यां वत्सरत्रयादावसति। स्वदेशस्य कृते ते परमदारुणमेवाचरितम् । स इदानीमनन्तानीकेन सह निवर्तेत इति मन्ये ।

**शीर्णाक्षः**—शीर्णाक्षः कः?

**श्रीनाथः**—स गालटेय इति किं न जानासि? सोऽत्र पाददेशाधिपो भूत्वा लोकोपप्लावकोऽभूत् । अस्मल्ललनाश्च तेन बहुशः सतीत्वात् दूष्यन्ते स्म ।

**शीर्णाक्षः**—तस्मिन्नन्याय्योऽयमारोपः स पाददेशाधिपो भूदिति त्वन्मुखादेवावगम्यते, तर्हि तस्य दूषणमपि भूषणं मन्यमानाः प्रियकान्ताः पर्याप्ता आसन्निति चिन्तये ।

**कमला**—तथा न वदत्वार्यः तथाविधाः स्त्रियः गालटदेशेषु न भवन्त्येव खलु, सन्तु नाम वाराङ्गनास्तथाविधाः, यासां जीवितमतिदूष्यमिति मादृशा आकलयन्ति ।

**दूतः**—(प्रविश्य) (श्रीनाथं प्रति जनान्तिकम्) भट्टारक! भट्टारक! जनाः! जनाः!

**श्रीनाथः**—किमस्मत्प्रजाः रम्यकप्रतिभटाः?

**दूतः**—देव अथ किं?

**शीर्णाक्षः**—(तयोः सम्भाषणं निगूढमाकर्ण्य, स्वगतम्) अहं तेभ्यो रम्यकप्रतिभटेभ्योऽत्यन्तं जुगुप्से.

**श्रीनाथः**—(प्रकाशम्) पियसख! स्वीरत! मम सुहृदः केचिन्मां

द्रष्टुकामा बहिरास्ते यावदहं निवर्ते तावदत्रैवात्मानं विनोदयितुमर्हसि (इति निष्क्रान्तः)

**शीर्णाक्षः**—प्रिये बहुवक्तव्यमस्ति, कालः परमत्यल्पः। तत् तत्पूजापात्रप्रेषितारं मामेव तद्गालटेयं प्रथममवेहि।

**कमला**—तर्हि सादरमभिवाद्यसे।

**शीर्णाक्षः**—इदानीं गालटेयाभिधो भवितुं रम्यामनुसरामीति ततो जानीहि। इदमेव रहस्यं, सम्यक् परिपालयेदं, नो चेन्मां तीव्रवेदनापात्रतया मृतिभाजनं करोषि। (समीपं गत्वा) क्रियतामिदं तव कर्णयोरेव 'प्रिये कामयेऽहं त्वाम्'। त्वय्येव मम प्रेमेति जगदम्बापादौ स्पृष्ट्वा शपेऽहम्। इदानीं त्वया सह तव भर्तारं नाशयितुं चारोऽहं प्रेषितः; परं एतत्कार्यात् प्राणत्यागो वर इति भावये। (अनन्तानीकेन प्रदत्तां पत्रिकामानीय) एषा पत्रिका अनन्तानीकहस्ताक्षरसहिता भवति।

**कमला**—वाचयति "त्वं श्रीनाथमवस्कान्दितुं यदि"

**शीर्णाक्षः**—(पत्रिकामाकृष्य) अतः परं न वाचयितव्यम्। शिष्टविषयः अबलाजनस्य न दृष्टिगोचरतार्हः। प्रिये! एतद्राजद्रोहवार्ता रम्यकभूपेन किञ्चिदाकर्णिता। तेन कोवा राजद्रोही न निगृहीतः, न ताडितः, न निस्त्वचीकृतः, न मारितो वा भवति?

**कमला**— अबलाखल्वहं, कुतस्तथाघोरतरं दण्डप्रस्तावं मयि प्रक्षिपसि?

**शीर्णाक्षः**—कुतस्त्वयि प्रक्षिपामि; कथं मामधिक्षिपसि; एतद्रहस्यभेदेन यदि मां तव भर्तृहस्तेऽर्पयासि, तदा यथाबलं तं कलङ्कयितुं प्रभवामि।

कमला—एतदाज्ञापत्रेण मत्कान्तं भेत्स्यसि किं ?

शीर्णाक्षः—पश्य ! एतदहं शकलशश्छिनाद्मि ! तथाऽहं करोमीति स्वप्नेऽपि मा कलय ।

(इति पत्रिकां छिनत्ति)

कमला—नितान्तं कृतज्ञाऽस्मि ते ।

शीर्णाक्षः—श्रीनाथेन न कदाऽप्येतत्कूटप्रबन्धः प्रकाशितस्ते ?

कमला—कोऽसौ कूटप्रबन्धः ?

शीर्णाक्षः—बालकैः क्रीडार्थं सिन्धुतटे निर्मितं सैकतायतनं तरङ्गैकमात्रस्पर्शेन नश्यति किल । सर्वं विदितं भवति रम्यायाः । इदानीं श्रीनाथस्य न लेशोपि विजयावकाशः ।

कमला—तावन्मात्रमपि वीराय श्रीनाथाय कुतो न कथयसि ?

शीर्णाक्षः—सत्यं सत्यं स अतिवीरंमन्यः, आत्मानं त्वां मां च नाशयितुं स एव समर्थः, तस्मादृते,

रम्यवैराशनौ तीक्ष्णे मस्तकोपरि संस्थिते ।
अवरुद्धपुरश्चम्वाः कोऽन्यस्स्यान्मृगयापरः ॥ ४२ ॥

परमयं रम्यकसैन्यैरच्छिन्नोऽनन्धीकृत एव पुनर्गृहमायादिति महदाश्चर्यम् ।

(एतच्छ्रुत्वा कमलावेपते)

शीर्णाक्षः—(स्वगतम्) तां सकम्पामकरवं, सानुकम्पामपि करोमि । (प्रकाशम्) तं यावन्मरणं ताडनादिभिः सङ्कटयितुमिच्छन्तीति जानीहि ! कथमिदं रहस्यं मयाऽवगतामिति तस्मै न प्रकाशयितव्यम् । गालटेयाधीश्वरो भवितुं रम्या मयाऽऽसेव्यत इति विदितमेव तव पत्रिकामुखात् । (किञ्चित् स्मृत्वा) " तावन्मात्रं

निवेदयितुं" तावन्मात्रं तस्मै मया कथितमेव । तस्योपजापः उन्मादकर इत्यवदम् । तदेवाद्य त्वामपि प्रतिवदामि । त्वं सुविचारवतीति रम्या जानाति, परन्तु रम्यकानां दौष्ट्यं त्वं न जानासि ।

**कमला**—हो! तव रम्यकेषु वाल्लभ्यमस्ति चेत् तद्रक्षणस्य कृते कलय किमपि संविधानम् ।

**शीर्णाक्षः**—नास्ति मे वाल्लभ्यं रम्यकेषु । अस्मिन् व्यापारे अनन्तानीकः प्रभवति—

(दैवादभिव्यक्तमन्त्र इव तामुपसृत्य)

**उज्जीवितं सर्गमनुक्षणं श्रीदीप्तिं विधातुं सकलस्यजन्तोः।**
**क्रियारतं कर्तुमशेषलोकं प्रभाकरो यावदुदेति पूर्वे ॥४४॥**

तत्पूर्व एव स भगवत्या दाक्षायण्या आलयद्वारसमीपे सेनया सञ्चरते । त्वमपि सौन्दर्यशालिनी अतिलावण्यवती । अनन्तानीकः सर्वदा मानिनीमणीन् सगौरवं सम्भावयति । स न कदापि योषित्प्रार्थनामन्यथा करोति । प्रार्थय तं, निःसंशयममुं करुणार्द्रहृदयं कर्तुं प्रभवासि ।

**कमला**—तथापि मत्प्रियाय एतत् कथये ।

**शीर्णाक्षः**—स्वस्य कृते रम्यकं प्रार्थयितुं स किमनुमोदते?

**कमला**—ध्रुवं नानुमोदते ।

**शीर्णाक्षः**—तर्हि इदं तस्मै न कथय । यदीच्छसि, अस्मत्सेनाधिपं दयार्द्रहृदयं विधाय, सर्वत्र क्षेममधिगता, प्रत्यावृत्य, अनन्तरं तस्मै निवेदय ।

(अत्रान्तरे शीर्णाक्ष! शीर्णाक्ष! इति बहिर्मिथः प्रवृत्तशब्दः श्रूयते)

**शीर्णाक्षः**—हा ! महाभागे, महत्कष्टमापतितम्, तीव्रवेदनासंपन्नोऽस्मि, मां मारयन्ति, अनुकम्पस्व ! अनुकम्पस्व !

**कमला**—इयमहमनुकम्पे त्वाम्; त्वदुदीरितं रहस्यं न भेत्स्यामि ।

**शीर्णाक्षः**—(प्रविशन्तं श्रीनाथं दृष्ट्वा) सुदूरमपसर, सुदूरमपसर ।

(श्रीनाथः दूतेन सह प्रविशति)

**श्रीनाथः**—स शीर्णाक्षस्त्वमेव ? त्वया वञ्चितोऽयं जनः; त्वामनन्तानीकसविधगतममन्ये । अङ्गशः विदारयितुं जनास्त्वामाह्वयन्ति ।

**शीर्णाक्षः**—अहमतीवापकृतः, गालटदेशशासने ममासीदादरः ।

**श्रीनाथः**—हे दुष्टात्मन् ! प्रथमं शाध्यात्मानम् ।

**शीर्णाक्षः**—हा ! दुर्दैवेन हतोऽस्मि ।

**श्रीनाथः**—न भेतव्यं न भेतव्यं, मद्गृहागतमतिथिं ते न बाधेरन् (इति द्वारं निर्दिशन्) गच्छ, तत्र गच्छ, इदमेव काननस्य द्वारं, निर्गच्छ, प्रयाहि, अद्यप्रभृति तवाहमरातिः संवृत्तः ।

**शीर्णाक्षः**—त्वं प्राणरक्षको भवसि, तत्ते कृतज्ञोऽस्मि । (इति शस्त्रमाकृष्य निर्गतः)

**श्रीनाथः**—(दूतं दृष्ट्वा) नास्त्यत्र शीर्णाक्ष इति तान्ब्रूहि ।

**दूतः**—यथाज्ञापयत्यार्यः । (इति निर्गच्छति)

**कमला**—किं स एव शीर्णाक्षः ?

**श्रीनाथः**—कुतस्ते सन्देहः । तत्र प्रजानामेकतमेनायमभिज्ञातः ।

**कमला**—एकतमेनैव, प्रायशः स मुखसाम्याद्भ्रान्तो भवेत् ।

**श्रीनाथः**—अलमलं कुवितर्केण; तर्हि प्रतिषेद्धुं अयं किं नपारयेत्, स तुभ्यं किमाह ?

**कमला**—स किं वदेत् ।

श्रीनाथः—हे प्रिये ! किं वदेत् कदाचिद्गालटाधिपं तं प्रजाः प्रचलनानर्हा रौप्यकादिमुद्रा इव गृहद्वारेभ्यो दूरीचक्रुरिति ।

कमला—तैः सानुकम्पं नानुचरितम् ।

श्रीनाथः—प्रिये ! लोकोत्तरकरुणाशालिनि ! श्रुणु—

भूधूमकेतुस्स हि पौरतुष्टेः स्वर्भानुभूतश्शिशुपालनेन्दोः ।
साध्वीमणीनां व्रतनाशवह्निस्सोऽभूत्किलात्र प्रकृतेस्सुशत्रुः ॥

किं च प्रजानां मारकः, तासां मोदावहवचनानामसोढा, तासां पत्नीपुत्रादियोगक्षेमविचारे साकूतं कुतूहली, स किं वा वदेत् ! तं गले ग्रहीतुं यद्यहं तव सविधेऽवर्ते, तदा स किमपि न वदेत् । तेन रम्यकजनार्हस्त्रीमोहेनात्मा कलङ्कितः ; कीदृशस्तत्पशोर्व्यापार इति त्वं कथं जानासि ।

कमला—तथापि स सहृदय इवाभाषत "सामन्तभूपेषु रम्यकभूपेन कृतां निकृतिमहमत्यन्तं गर्हये" इत्येवावादीत् ।

श्रीनाथः—तथाऽवादीत् किं ? अहो ! अस्य निष्कापट्यम् ।

कमला—तर्हि त्वयात्रागन्तुं परेषां न कदाप्यवकाशो दीयते किल । तथाविधेन त्वया मृगयायां स सहायः कृतः खलु ।

श्रीनाथः—खेनैव मृगो निहत इति अस्य प्रलापः किम् ?

कमला—न तथा, मृगवार्तां स न कदाऽप्यस्पृशत् ।

श्रीनाथः—मच्छरेणैव तस्य निपातः, भवतु, स्वपिवः (इति कवाटं संघट्टयितुं गच्छति)

कमला—मा कुरु मा कुरु कवाटबन्धनम् । इयं रजनी दिनप्रभार्धभागिनीव दृश्यते ।

श्रीनाथः—मत्सुहृदस्तं निरीक्षमाणा वर्तन्ते। तस्मिन् पलायमाने रहसि लब्धावकाशास्तं मारयिष्यन्ति।

कमला—स जगामैव। पश्य पश्याऽत्र सृष्टिसंपत्समारम्भः—

शैलोऽयं परिदृश्यते बहुविधैर्वृक्षैस्समावेष्टितो
ज्योत्स्नायामवगाहनाद्धिमवता साकं श्रिया स्पर्धते।
वल्लीनां समरोहणं तरुततेर्मूर्धस्वभूत् सङ्गमा-
त्सीमासीदचलाभ्रयोश्शबलितैर्विस्तारितैस्तत्करैः॥४६

किञ्च—

एकत्र कूजन्ति पतत्रिसङ्घाः
कूजन्ति वातेरितवेणुरन्ध्राः॥
अन्यत्र धावन्ति कुरङ्गयूथा
न्यम्भोनिधिं ते गिरिनिर्झराश्च॥४७॥

हे कान्त! किं स्मरसि?

तत्रैवासीत्प्रथमपरिचयोह्यावयोःप्रेमभूमि-
र्भोगारम्भोव्रततिविटपिनोस्स्नेहवत्प्राग्यथेष्टम्।
नेत्रैर्हासैर्हृदयमनुगतैरात्तसौहार्दलाभा
न्भूमावावां व्यसनविरहितौ स्वेष्टसौख्यं भजावः॥४८

श्रीनाथः—प्रिये! स्मरामि, किं त्वमपि स्मरसि यदत्रैव मया प्रथमं चुम्बिता।

कमला—(सलज्जं) इदानीं (इत्यर्धोक्तौ लज्जां नाटयति)

कमला—इदमेव चरमचुम्बनमिति मा जानीहि।

श्रीनाथः—इदानीमपि चुम्ब्यसे तदेव चरमचुम्बनमिति मा जानीहि।
(इति सस्पृहं तस्या मुखं निरीक्षते)

कमला—(सलज्जस्मितम्)। प्रिय! किञ्चिद्भुज्यताम्।

**श्रीनाथः**—वयं गोपालव्रजमासाद्य तत्र फलानि क्षीरं चास्वादयाम (किंचिदालोच्य) स मृषावादी सत्यं मृषावादी, स हरिणं न जघान, अहो! अस्य पराक्रमः! श्वो द्रक्ष्यसि तस्य पराक्रमम् ।

**कमला**—श्वः प्रभाते पावनमिदं पात्रं दाक्षायणीगृहं प्रापयिष्यामि ।

**श्रीनाथः**—न्याय्यं, तथैव क्रियताम् ।

**कमला**—यदि मुहूर्तान्न निवर्तिष्ये तदा तत्र मामनुगच्छ ।

**श्रीनाथः**—किं तत्र कामपि विपदं शङ्कसे?

**कमला**—कामपि न जाने । अस्मद्देवीगृहमत्यन्तसमीप एव वर्तते खलु ।

**श्रीनाथः**—अहम् अतिनिद्रालुः तव प्रयाणात् पूर्वं मां दयया उत्थाप्य तदनु गच्छ, अहं त्वां अनुगमिष्यामि, इदानीं मामनुगच्छ ।

(इति कवाटं बध्वा निर्गतः)

**कमला**—हा! अत्र छाया! किमयं शीर्णाक्षः! तस्य मुखे न कमपि दुष्टभावमपश्यम् । जनाः केवलं तं दुष्टं भणन्तीति सोऽवादीन् किल । किं गच्छानि? एकैव तत्र गन्तुं किं प्रभवामि? किं मरणभयम्? अथवा किमप्यनिष्टमापतेत्? स कदापि योषित्प्रार्थनां नान्यथा करोतीति अहमभिहिता किल । तस्माद्धीरं गच्छामि, परन्तु शस्त्रवती गन्तुं युक्तम् ।

(इति निष्क्रामति)

इति प्रथमोऽङ्कः

———

## द्वितीयोऽङ्कः

प्रथमदृश्यम्—दाक्षायणीगृहप्रान्तदेशः। उषःकालः।

नेपथ्ये—

उषा सेयं नीत्वाऽवति नवनवान् सृष्टिनिवहान्
मनोधर्मान् स्वापे लयमधिगतान् सत्त्वबहुलान्।
विधायार्यान् देवे कृतदृढमतीनद्भुतचणान्
पतिं प्रत्युद्गन्तुं विशदवसनालङ्कृतवती ॥ १ ॥

(देवीगृहे सङ्गीतं प्रचलति)

(देवि दाक्षायणि ते नमो नमो इत्यादि)

(ततः अप्रमत्तः शीर्णाक्षः प्रबलेन सैनिकैश्च सहितः प्रविशति)

शीर्णाक्षः—हे प्रबल!

प्रबलः—देव! एषोऽहमास्मि।

शीर्णाक्षः—किं स्मरसि यन्मयाऽऽदिष्टम्?

प्रबलः—स्मरामि तत् "यत्त्वया रम्या रम्येति यदाऽऽहूयते तदा त्वया सह यः कोऽपि जनः (स्त्री वा पुरुषो वा भवतु) भाषमाणस्तिष्ठति स रम्यकराजाभिद्रोहीति व्यपदेशेनाव-स्कन्दितव्य" इति।

शीर्णाक्षः—सत्यं, यथोक्तमेव स्मर्यते त्वया, अभिज्ञोसि निवर्तस्व इदमपि ज्ञातव्यं यूयं कुत्यत्र भवथ!

प्रबलः—अत्र मां विना नवग्रहाः (ससैनिकः प्रबलो निष्क्रामति)।

शीर्णाक्षः—मत्समीपेऽयमस्ति शरीररक्षकः। तदद्य पूर्वस्मिन् दिने मां काननेऽनुधावितेभ्यो जनेभ्यः कुतो बिभेमि! पूर्वरात्रेऽति-

कष्टेनैव सैनिकस्थानमासादितं मया। (किंचित् स्मृत्वा) सा श्रीनाथेन मत्स्वभावचेष्टितानि सम्यङ्नाववोधिता इति शङ्के। भवतु अधुना मत्सविधमागता सा जानीयादलम्।

स्वभावः कीदृग्वा प्रभवतु पुराकर्मफलतो
यथा वा स्याद्दैवं ग्रहगतिरलं तत्र विषये।
विचारः को वा मे सुखपरधियो भोगधनिनो
युवाऽऽशास्ते सौख्यं खलु जनिमतां केन विधिना ॥ २ ॥

तस्मान्मम मदाश्रितानां च सर्वदा सौख्यमेव भवतु। (ससम्भ्रमम्) कथं ते मामवधीरयन्ति! अहो! सा नागमिष्यतीति प्रतिभाति, अथवा यदि सा श्रीनाथमतानुयायिनी भवति, तदा तमापदो रक्षितुमत्रागमिष्यत्येव। (दूरादालोक्य), अहह! अहह! सा आगतैव इदानीं हंसीव मम कपटवागुरायां पदमर्पयति। (सकंपम्) किमिदमत्यद्भुतम्? किमशुभदम्? (इति भयं नाटयति)। (किञ्चिदालोच्य)—

लतागृहे स्त्रीं प्रथमोपभोग्यां
समेत्य बालो यदि वेपतेऽलम्।
कम्पः कुतो मे ननु धैर्यभूमेः
कुतोऽद्भुतं तद्गणये विमूढः ॥ ३ ॥

(ततः प्रविशति पात्रहस्ता कमला)

शीर्णाक्षः—अहो! प्रभातमासीत्, सूरसूतः पुनः भगवतो मरीचिमालिनः पुरस्ताद् दृश्यते, पतत्रिणोऽपि नीडेभ्य उड्डयितुमुत्सुका मधुरमारवन्ति।

कमला—कुत्रास्त्यनन्तानीकः?

शीर्णाक्षः—न तावदयमत्रायातः, त्वमतिशीघ्रमागतवती ।

(कमला देवीगृहाभिमुखी गच्छति)

शीर्णाक्षः—न तथा कर्तव्यम्, त्वमधुना कुत्र गच्छसि ?

कमला—भगवत्या आर्तमातुर्दाक्षायण्या गृहे पूज्यमिदं पात्रं निवेशयित्वाऽचिरात् प्रतिनिवर्तिष्ये ।

शीर्णाक्षः—अनन्तानीकं द्रष्टुमत्र शीघ्रमायाहि । (सा देवीगृहं प्रति गता) (शीर्णाक्षस्तामेव अनिष्पन्दनिमेषं पश्यन्) अहो ! अस्यास्सौन्दर्यसंपत्—

तेजःपुञ्जविभासितां वरतनुं दिव्यङ्गनाभ्रान्तिदां
मन्ये भूमिविभूषणं विधिरिमामुज्जीवनार्थं नृणाम् ।
राज्ञीं प्रेषयति स्म भूरि लसितां वृत्तैर्निजैः सद्गुणै-
र्भोग्यं भर्तृसुकर्मजं कथमियं ह्यस्मादृशैः प्राप्यते ॥ ४ ॥

भवतु तामेवानुसरामि । (इति निर्गच्छति)

द्वितीयदृश्यम्—स एव प्रदेशः.

(नेपथ्ये) हा !!! हा !!! अत्याहितम् ! अत्याहितम् !!

(ततः प्रविशति वृद्धतापसी, अनन्तरं प्रभावती च)

वृद्धतापसी—प्रभावति ! कुत्र गतोऽसि ? कस्मात्प्रदेशादागतोऽसि ?

प्रभावती—अहं देवीपूजायै पुष्पाण्यपचेतुं वनमध्यं गता, तत्र अचिरात्प्रवृत्तं अतिघोरव्यापारं निरीक्ष्य भयाकुलितमनाः अत्रागता ।

वृद्धतापसी—कस्तावदतिघोरव्यापारः ?

प्रभावती—किं न श्रुतं भवत्या अत्याहिताक्रन्दनम् ?

**वृद्धतापसी**—श्रुतं श्रुतं यच्छ्रवणेन सञ्जातसाध्वसा, देव्यास्सदन-समीपे तव असन्निधानेन द्विगुणितभयाकुलितचेताः, त्वामेवा-न्वेष्टुमहमप्यत्रागताऽस्मि । अम्ब! किं तदत्याहितं कथय ।

**प्रभावती**—तर्हि श्रूयताम् । साध्वीमणेः कमलायाः तद्रूपसौन्दर्याकृष्ट-चेतसः शीर्णाक्षस्य च, यो व्यापारः प्रचलितः तमेवानुवदामि ।

**शीर्णाक्षः**—(स्वगतं) "तामनुसरता मया मार्गे तावत् विविधानि दुर्निमित्तानि दृष्टानि किल। अत एव पुनरत्रायातोऽहं । सा पुनरत्र निवर्तिष्यत इति प्रत्यय एव मां जीवयति । एते रम्यकाः पुनः देवीगृहप्रवेशे नाधिकारिणो भवन्ति, भवतु मयेदं क्रियते—

कामकलां कमलां तां धैर्याच्छिबिरं नयामि यदि साध्यम् ।
प्राणानुत संत्यक्तुं सिद्धोऽहं तत्कृते दीनः" ॥ ५ ॥

(सधैर्यम्) "किं प्रलपामि! कस्याश्चिदबलाया अलाभात् किं प्राणान् त्यजामि! अतिनूतनोऽयं व्यापारः, नाहमुन्मत्तस्तथा-कर्तुं, न च व्याधिपीडितः, नापि जरठः; एकस्य वस्तुनः अलाभे मम किं दैन्यम् ?" (पुनः मोहपाशं गत्वा) "अथवा सत्यम् अतिगम्भीरस्वभावायाः सहृदयहृदयहारिण्याः कामिनीमणेः कमलायाः कृते अहमुन्मत्त एव भवामि, अयमेव मेऽलङ्कारः, किन्तु दैवान्मयि काप्यनाकाङ्क्षिता विपदापतेदिति भृशमुद्विग्नो भवामि। हा! विधे! अहो! आत्मानं स्मर्तुमधुना न प्रभवामि! विपरीतजनमिवात्मानं पश्यामि"इति ।

**वृद्धतापसी**—ततः ।

**प्रभावती**—ततः प्रवृत्तमितिवृत्तं यथावद्वदामि शृणु ।

**वृद्धतापसी**—अवहिताऽस्मि ।

(ततः कमला देवीगृहात् प्रतिनिवृत्त्य शीर्णाक्षं दृष्ट्वा एवं वदति)

**कमला**—" किमागतोऽनन्तानीकः ? "

**शीर्णाक्षः**—" नागत एव त्वमतिशीघ्रमागतवती ", इति हि पूर्वमेवोक्तं किल मया ।

**कमला**—" एकान्ते त्वया सहात्र भवितुं, अहमतिशीघ्रमागतेति वदसि किं " ?

**शीर्णाक्षः**—(किञ्चिद्विहस्य) " हे मानिनि " !

**कमला**—" पुरुषाधम ! त्वामसाधुचरित्रं वदन्तु वा मा वा पुरुषाः, साध्वीमणीनां एतादृशभाषणं जुगुप्सामावहति । कुत्रायमनन्तानीकः " ?

(इत्युच्चैः पृच्छति)

**शीर्णाक्षः**—" हे मानिनि ! तस्य स्थानं पुरात् पादक्रोशैकदेशे वर्तते, यदि मया सह पद्भ्यां चलितुमिच्छसि, तर्हि अनन्तानीकस्य दर्शनं प्रायः मार्ग एव भवति, अथवा तत्सेनासन्निवेशे, तं निःसंशयं द्रक्ष्यसि " ।

**कमला**—' न हि न हि, त्वया सह एकमपि पदं न चालयामि, कुत्रानन्तानीकः ' ?

(इत्युच्चैराक्रन्दति)

**शीर्णाक्षः**—(उपसृत्य) " कोपने ! मर्षय ! तर्हि त्वदर्थं तवभर्तुः श्रीनाथस्य कृते च बलात्त्वमद्य नीयसे इति सविनयं विज्ञापये " इति ।

**वृद्धतापसी**—अहो ! शीर्णाक्षस्य दौष्ट्यं, सर्वलोकासम्भाव्यम्, ततस्ततः ।

**प्रभावती**—ततः परं शृणु । यथा--

**कमला**—(स्वकटिस्थं खड्गमाकृष्य) "तिष्ठ! मूर्ख! तिष्ठ! समीपगतश्चेदचिरात् मृत्युमुखं प्रविशसि" ।

**शीर्णाक्षः**—(खड्गमपनीय), "कियदिदं कार्यं अबलाकरादसिमाहर्तुम्" ।

(अत्रान्तरे श्रीनाथः प्रविश्य पृष्ठतस्तं गले गृह्णाति)

**शीर्णाक्षः**—'रम्या! रम्या!! हा! हा!!' (इत्यस्पष्टाक्षरमाक्रन्दति)

**श्रीनाथः**—"जारगार्दभ! दर्शय ते व्यापारमधुना",

**शीर्णाक्षः**—"किमिदं गृह्णासि?" इति कमलाया हस्तात् खड्गमाकृष्य, तेन तं विध्यति, सुदूरं भयात्प्रधावति च। (कमला विलपन्ती श्रीनाथसमीपं गच्छति)

**श्रीनाथः**—(पृष्ठतः भूमौ पतित्वा) "हा प्रिये! मन्दभाग्योऽहं! देवीगृहं गच्छ; मत्प्रार्थनां सम्यगनुरुन्धि, नोचेत्त्वामवस्कन्दन्ति सैनिकाः। मम पुनः इदमेवात्र चरमं तव दर्शनं। त्वदेकजीवितं मां संस्मर संस्मर, गम्यताम् गम्यताम्! कल्याणमस्तु ते" (इत्याक्रन्दन् निर्गतासुर्भवति)

**कमला**—"हा! प्राणनाथ! क्वासि! क्व गतोऽसि! मन्दभाग्याहं" इति प्रलपन्ती धैर्यमवष्टभ्य देवीगृहं प्रधाव्य सोपानमारुह्य श्रीनाथं समीक्ष्य "शिवास्ते पन्थानः सन्तु" इत्याशासत।

**वृद्धतापसी**—हा! सा कमला दुष्टमतिना शीर्णाक्षेण वञ्चिताऽभूत्। भवतु साधयावः तत्र भवतीं कमलामाश्वासयितुं ।

(इति प्रभावत्या सह निष्क्रान्ता)

(इति शुद्धविष्कम्भः)

तृतीयदृश्यम्—स एव प्रदेशः.

(ततः प्रविशति शीर्णाक्षः)

शीर्णाक्षः—(निर्गतां कमलां पश्यन्) अहो! देवीगृहे ललनास्तामन्तः प्रवेशयन्ति! प्रबल! प्रबल! तामाहर। तामाहर। (किञ्चिदालोच्य) न तथा न तथा, देवीगृहमपवित्रीकर्तुं अनन्तानीको न सहते। सा निर्गतैव।

(श्रीनाथस्य कलेवरं दृष्ट्वा)

जारगार्दभभाषिणं मम खड्गविद्धकलेवरं
क्रोधरागसितेक्षणं सुखवर्जितासुमरिं खलम्।
स्तेनकृत्यगलग्रहं सुनिहत्य मे हृदयाशयं
प्राप्तवानहमेधते भुवि सौख्यमेव सदा मम॥ ६॥

कुत्रगतस्तस्य क्रोधाभिनिवेशः, तस्य सर्वे रागविकाराः स्मरणीयदशां प्रापिताः किल; रागविकारैः किं वा क्रियते? विवेकी चेद्विचारपरो भवेत्। यतः—

नरत्वे को लाभो? विषयसुखभोगो, भवति कैः?
समक्षव्यापारैः, स्थितिगातिनिदानं किमु नृणाम्?।
अणूनां संसर्गाद्भवति परिपाकः प्रकृतितः,
पराभूमिः काऽऽस्ते? निहतविषया शान्तिरनिशम्॥

किञ्च—

आलस्याद्वरमुद्यमो, मृतिभयाद्देहेन्द्रियाणां स्थितेः
सन्धानं वरमित्यहो! बलवती श्रद्धा नृणां रागजा।
यत् किञ्चित्क्रियतेऽनुभूयत इह स्नेहाद्धि संभाव्यते
व्यर्थं सर्वमवैमि हा! मृतिमुखे सन्दग्धरागार्भटात्॥

इन्द्रियाणि सुपथा नीतानि चेत् सुफलान्येवातन्वते अन्यथा चेत् अन्यथैव—

तृष्णासागरविप्लवो बुधगणैरन्यादृशो भाव्यते
पीते स्वाद्विति तज्जले मुहुरहो तृष्णा भृशं वर्धते ।
यावन्नीरमथो पिबन् प्रविलयं गच्छेज्जनो नौर्यथा
तस्मान्मोहदतृष्णया विरहितस्तृप्तः सुखं प्राप्नुयात् ॥

अस्मिन्विषये नाहमुन्मत्तः । स्वेष्टं लब्ध्वा पुनस्तद्विगुणितं कर्तुं लब्धमपि नाशयितुं वा किमहं द्यूते पणमभ्यर्थये? मत्कृतबहुविधोपायप्रभवप्रयोजनैस्तुष्टोऽयं रम्यकराज्यतन्त्रसमाजः मां किरीटाधिपं कर्तुमिच्छति, कमलाऽपि राजमहिषी भवति, सा प्रकृत्या प्रकृतिवत्सला खलु । तस्मात्तां मय्यनुरागिणीं यदि करोमि, तदा तस्यामिव तदनुचरे मय्यपि प्रजा अनुरागिण्यो भवन्ति, तदनन्तरं रम्यकसार्वभौमस्य सामन्तभूपो भूत्वाऽहं प्राप्तप्रतिष्ठो भवामि । श्रीनाथस्य कलेबरं वीक्ष्य, (सानुकम्पं) कुतस्तं व्यापादयं! 'स राजद्रोही' इति निश्चित्य रम्यकसविधमानेष्यत यदि, तदा तैरेव मरणं प्रापयिष्यत । स मत्प्राणान् ररक्ष खलु, (सगर्वं) ररक्ष किं? तेनाहं रक्षित इवागणयम् । (सविषादम्) 'अविनयसंपन्नः स मूढ' इति यदा तस्यै निवेदितं तदा, हा! सा मय्याक्रोशवती बभूव । (स कुतूहलं) हे प्रिये कमले! अनुकंपस्व! अनुकंपस्व! (सोत्साहं) मन्मनोरथं सफलयितुं हठाद्वा चाटूक्तिभिर्वा का ललना मया न निर्जिता भवन्ति । नूनं विविधानर्घरत्नखचितेन मकुटेन मस्तकमलंकर्तुं सेदानीमुत्सहते ॥

लतागृहे तामनुगम्य रागात्
सुखं भजे हंस इवात्र हंसीं ।
प्रीत्यैव शासन्नुतगालटेयान्
रम्यानुरक्तो विजयै चिराय ॥ १० ॥

अहो! रम्ये! श्लाघ्या त्वदुपकृतिः सर्वथा सर्वदाऽहं कृतज्ञो भवामि ॥

(प्रबलः सैनिकाश्च प्रविशन्ति)

शीर्णाक्षः—भो! सैनिकाः रम्या रम्येति द्विवारं मयाऽहूतं किल कुतो नागच्छत यूयम्?

प्रबलः—इदानीं वयमत्रायाताः, कमवस्कन्दाम?

शीर्णाक्षः—(श्रीनाथस्य कलेबरं दर्शयन्) राजद्रोहिणः श्रीनाथस्य कलेबरमिदं संस्करणार्थं वाह्यताम् ।

(सर्वे)—यथाज्ञाऽपयति प्रभुः (इति तथा कुर्वन्ति)

(देवी सदने गीतं वाद्यघोषश्च प्रचलति)

(सर्वे निष्क्रान्ताः)

इति द्वितीयोऽङ्कः

---

# अथ तृतीयोऽङ्कः.

## प्रथमदृश्यम्—देवीसदनम्.

वैतालिकाः—

लोकाम्बायास्सुमृदुमसृणो विग्रहो दिव्यरूपो
देव्यास्स्थानं कनकमणिभिर्भूषितं हृद्यभूम्याम् ।
कौशेयाढ्या शुभयवनिका लम्बते द्वारि रम्या
दीपो भाति श्रितरविरुचिस्सन्ततं त्र्यस्रवेद्याम् ॥ १ ॥

अत्र हि—

स्तम्भानामन्तरेषु प्रविलसति सदा लम्बिता दीपरेखा
पूजार्थं पुष्पराशिर्मधुदधिसुघृतक्षीरनीरप्रधानम् ।
प्रत्येकं पात्रमेतत् फलचयभरितं सामगीतं सुवाद्यम्
चित्रालङ्कारकृत्यै गृहमिहरचितैर्भाति सेवाङ्गनाभिः ॥२॥

(ततः प्रविशन्ति काश्चिद्देवीसेवकाः, वृद्धतापसी, प्रभावती च).

सर्वाः—("देवि दाक्षायणि ते नमो नमो" इति पूर्ववत् स्तुवन्ति).

वृद्धतापसी—प्रभावति ! तत्रभवतीं तपस्विनीं द्रष्टुकामो बहुवारमागतः शीर्णाक्षदूतोऽयं भूयोऽपि देवीसदनमधितिष्ठति ।

प्रभावती—तपस्विन्यै तावदावेदयाम (इति सेवकास्वन्यतमां संज्ञया चोदयति) । (साऽपि निर्गच्छति) ।

शीर्णाक्षग्राहभीता गजगतिकलिता प्राप्य देवीं शरण्याम्
नारायण्याख्यशक्तिं ह्यवसदिह यदा स्त्रैणचक्रेण गुप्ता ।
गाम्भीर्यस्थैर्यधैर्येष्वभिनुतचरितेत्याकलय्याऽथताभि-
स्स्त्रीभिस्सा सेवकाभि स्स्वगुरुजनपदे स्थापिताऽभून्मनोज्ञा॥

तदा प्रभृत्येव समाधिनिष्ठा
निष्पन्दनेत्रा निभृतोज्ज्वलाङ्गी ।
चकास्ति साद्याऽक्षिविकासयुक्ता
संलक्ष्यते तं परिणेतुकामा ॥ ४ ॥

**वृद्धतापसी**—इयं स्वभर्तुः श्रीनाथस्य हन्तारं कथं परिणेष्यति ?

**प्रभावती**—साऽत्रैवागच्छति तामेवपृच्छ । (स्वीकृततपस्विनीवेषा कमला प्रविशति) ।

**वृद्धतापसी**—हे तपस्विनि ! त्वं शीर्णाक्षं न परिणेष्यसि किल ।

**कमला**—मृतपतिस्संवृत्ताहं, तत्तमेव परिणेष्यामि ।

**वृद्धतापसी**—न तु शीर्णाक्षम् ?

**कमला**—एतद्दैवाविष्टवचनं अन्यैदेवाविष्टवचनान्येवानुकरोति न तु सुविशदं बोधयितुं प्रगल्भ्यते ।

**प्रभावती**—कमले ! भगवतीगृहाङ्गणमधितिष्ठता शीर्णाक्षस्य दूतेनाऽमुना किं सम्भाषितुमीहसे ?

**कमला**—कुतो न सम्भाषे, अन्तः प्रविशत्वयम् ।

(इति त्र्यंघ्रिपीठसविधमुपसर्पति).

(दूतः प्रविशति)

**दूतः**—देवि ! शीर्णाक्षस्त्वां शिरसा प्रणमति, तव कुशलमापृच्छते च; त्वया अनेकशोऽस्य पाणिग्रहणं तिरस्कृतमासीत्, पुरा मत्पुरत एव यस्मिन् त्वमनुग्राहकेवालक्ष्यथाः, स इदानीं तव सुविनिश्चितं वचनमनुपालयति; यदाऽयं श्रीनाथमवधीत् तदा अनेकशो मया यथैवोत्प्रेक्षितम् तथैवापतितम् ।

**कमला**—किं तदा ?

दूतः—तदाऽसौ स्वखड्गग्राहकः कोऽयमिति प्रत्यभिज्ञातुं न शशाक।

कमला—किं तेन ?

दूतः—तदिदानीमयं, स्वकृत्यं क्षम्यतामिति प्रार्थयते। हठादेव तत्कृत्यमाचरितम् ? परन्तु स न तथाविधघातुकः यथैव प्रतीयते, इदानीमस्य यावदभीष्टं त्वत्प्रणयसौधमारोहति, वचनमिदं विश्वासपात्रं क्रियतामिति स पुनः पुनः प्रार्थयते।

कमला—एषा विश्वस्तेति प्रत्ययं स साधु परिपालयतु।

दूतः—साध्वेतत् इतोऽपि किं ? तर्हि तं परिणेतुमिच्छसि ?

कमला—परिणेतुमिच्छामि यदि तत् साधु सम्पद्यते।

दूतः—

अद्यैव कुर्वन्ति किरीटशीर्षं
तं रोमकास्तत् परिपालनार्हम्।
स इच्छति त्वां परिणीय कर्तुं
कृताभिषेकां जनतासमक्षम् ॥ ५ ॥

तदा द्वेषपरित्यागे युवयोः स्नेहसम्भवे।
प्रत्यायिताः प्रशंसन्ति जनास्ते रम्यशासनम् ॥ ६ ॥

कमला—अद्यैव ? अतिक्षिप्रं ? तर्हि स कदा किरीटधारी भविष्यतीति अभिध्यायामि।

दूतः—इदानीमेव।

कमला—कुत्र।

दूतः—अत्रैव देवीभवननिकटे।

कमला—यदि पुनस्त्वं राज्याभिषेकात् पूर्वमत्रागच्छसि तदा मत्तः प्रत्युत्तरं प्राप्नोषि।

दूतः—साधु महाभागे (निर्गच्छति)।

प्रभावती—हा! भगवति! अहह! तपस्विनि! त्वया श्रीनाथ-रुधिरारुणपाणिग्रहणे साध्वाचरितम्, साधु साधु! सविवेक-माचरितम्।

कमला—

तत्साधु मन्ये मम शस्त्रमुच्चै
शशीर्णाक्षविद्धं रुधिराम्बुराशौ।
श्रीनाथदेहे शुभसत्यगेहे
साधुत्वमालोक्य निमज्जतीति ॥ ७ ॥

किञ्च—

मन्ये तत् साधु यद्देही मृत्युमाप्तुं भवेदभीः।
तं विवेकं विजाऽनेहं यद्विधेरनुवर्तनम् ॥ ८ ॥

अयं समीचीनमेवावदत् किल अहं गालटेयी, सोऽपि गालटेयः, उभावपि सामन्तौ, अस्मज्जनानुरोधेन कुत्र करं ग्रहीतुं सांप्रतमिति आवां रम्यामुपदिशाव। नकिमुचितमत्र गुरुकर-ग्रहणम् तत्र तु फल्गु इति विजानातु रम्या। अहं पुनः प्रजाभ्युदयकरणव्याजेन यस्य स्वकामसंपादनाग्रहः समुज्जृम्भते, तस्यावग्रहमुद्वीक्षितुमेव जीवेयम्।

प्रभावती—तर्हि तं न परिणेष्यसीति निश्चीयते?

कमला—किं तथा ते निश्चयः? प्रतीक्षस्व किञ्चित् सम्यग्विज्ञायते।

(नेपथ्ये दूरतः शीर्णाक्ष! शीर्णाक्ष! इति कोलाहलः)

कमला—किं 'शीर्णाक्ष शीर्णाक्ष' इति प्रजानामद्य घोषः? अचिरादेव ते 'श्रीनाथ! श्रीनाथ!' इत्याचुक्रुशुः किल, हा! हतो धर्मः हता नीतिः?

पक्षात्पक्षं प्रवेष्टुं परिणतमतयो नीतिशून्या जना ये
　निन्दन्त्यात्मीयकृत्यं परिभवसमये मानहीनाः क्षमन्ते ।
गोप्तुं शश्वत् स्वचेष्टामनृतशतवचांस्यादरात् सम्भणन्ति,
　प्रायो दुष्टात्मरीतिर्विलसति विविधा स्वेष्टकौटिल्यगत्याम् ॥

प्रभावती—रम्यकसैनिकानां कोलाहल इव श्रूयते ॥

कमला—

मध्याह्ने मदमोहिताः कवचिनं वालेन्दुमात्मप्रभुं
　हत्वाऽद्य प्रसृतोद्यमाः क्षितिपतिं कर्तुं प्रजाद्रोहिणम् ।
यं छेत्तुं शिरसा समं शकलशो मध्याह्नचण्डार्चिषं
　क्रीडाकन्दुकभङ्गतो वहुरतास्तेषामहोचापलम् ॥ १० ॥

न पारयाम्यत्र समीक्षितुमिदं । अन्यत्र उच्चस्थानं प्राप्य, विधिविलासमवलोकयामि ।

(इति अन्यत्र गच्छति)

द्वितियदृश्यम् पूर्वोक्तप्रदेशः.

(सोपधानपीठालङ्कृतं राजमकुटमादाय, गालटेयानामग्रणीः शिष्टः सपरिवारः प्रविशति) ।

शिष्टः—(प्रणम्य) महाभागे ! शीर्णाक्षस्त्वां शिरसा प्रणम्य, ते कुशलमापृच्छते । गालटेयेषु प्रथमं राज्ये अभिषिक्तायाः राज्ञ्याः किरीटमेनं तुभ्यं प्रेषयति, तद्गौरवेणापि आत्माभिरुचिस्संपाद्यताम् । अद्यैव तस्य जीवितेन समं निजीविषुर्भूत्वा, सिंहासने तस्य पार्श्वस्थलमलङ्कर्तुं मकुटमिदं धारय । स इदानीं त्वत्तः प्रतिवचनं प्रतीक्षमाणस्तिष्ठति ।

कमला—उच्यतामयं, छायारूपवेतालेषु अत्याश्चर्यभूतः नवीनः एकश्छायाभूतो भूतः, अद्यापि प्रतिवासनापरिवेष्टितो भवति । स यदि

'शीर्णाक्षेण सह कमला सिंहासनमधितिष्ठती'ति घोषमाकर्णयति, स तदा हाहाकारेणाविर्भूय, स्वपार्श्वदेहे मत्खड्गेनापादितम् शोणितव्रणं प्रदर्शयन्, राजानं मां च हन्यात्। एवं जनसमुदायमपि अतिघोरं पीडयेत्। हे महाशय! न करोम्यहं तथाविधसाहसं। प्रथमं तं राज्यपदमारोपयन्तु जनाः, अनन्तरं भवतु परिणयप्रसङ्गः, अथवा गालटेयमकुटोऽयं मयाङ्गीकृत इति तं कथय। (संभ्रान्तास्सर्वे), दृष्टेयं किरीटधारिणीति वा कथय। (इति स्वयमेव शिरसि मकुटमारोपयन्ती), तस्य राज्ञः महिषीभवितुं तमेव प्रतीक्षे।

**शिष्टः**—साधु भणितम्। तस्मै निवेदयामि।

(इति सपरिवारो निर्गच्छति)। (नेपथ्ये संगीतं प्रचलति)।

द्वे सेवके देवीसदनस्य पुरतः कवाटमुद्घाट्य, सम्यग्देवीदर्शनाय यवनिकामपसार्य, सोपानपार्श्वयोः प्रत्येकमास्थाय, साञ्जलिबन्धं प्रणमतः॥

एका तापसी अन्तर्गत्वा परिणयपरिधानमानीय कमलां परिधापयितुं प्रभावतीमुपकरोति। तदा सेवकाः प्रविश्य, देवीभवनस्योभयतः पार्श्वयोस्तिष्ठंति॥

सेवकाभिः सह कमला साञ्जलिपुटा भगवतीं नमस्करोति। तदा, शीर्णाक्ष! शीर्णाक्ष! इति घोषः (श्रूयते सर्वे तिष्ठन्ति)॥

**कमला**—कवाटं सम्यगपावृणुत पश्यन्तु कौतुकं तापसकन्याः।
(स्वगतम्) आतपो द्वारतः प्रसरति (प्रभवातीं दृष्ट्वा) (प्रकाशम्)
नोत्सहेऽहं समीक्षितुमिदं, मदर्थं त्वमेव वीक्षस्व।
(इत्युक्त्वा, आत्मानं गोपायति)

ततः, 'जय जय शीर्णाक्ष!' 'विजयतां विजयताम्'
इति कलकलध्वनिः प्रसरति.

प्रभावती—हन्त! स सिंहासनमधिरोहति! चण्डप्रकृत्या, राज्यलोभेन, दुरभिमानेन च, तस्य मुखं पीनारुणं दृश्यते। हो! पशुप्रकृते! अयं ते तृतीयपर्यायोऽङ्गविकारः चरमो भवेदित्याकांक्षे। अहो! साधो श्रीनाथ! तव च, अस्य च कियदन्तरम्।

कमला—(भूम्यामुपविश्य) सत्यं त्वमन्यथा गणयसि तं, मुखभावेनायं श्रीनाथादपि सुन्दरतरः।

प्रभावती—(स्वगतम्) तथा वदितुमियं कथं सहते, अनेन व्यापारेण, सा मे द्वेष्या भवितुमर्हति यदिदानीं व्यसनाक्रान्ता न भवेत्।

(तदा शृङ्गध्वनिः समुज्जृम्भते).

कमला—किमसौ मकुटमधरत्?

प्रभावती—आम्! एते इदानीं तं किरीटं धारयन्ति।

जनाः—विजयतां शीर्णाक्षः, विजयतां शीर्णाक्षः।

(कमला तिष्ठति, एका सेवका धूपसम्भारान् आहरति).

कमला—तान् वेदिकायामग्नौ प्रक्षिप्य,

त्वं ज्वालयाग्निं शुभसूचकं नो
दशाङ्गगन्धागरुधूपपातैः।
तत्सौरभाढ्यो वहति प्रसन्न-
स्सुनन्दनोद्भूत इवानिलोऽद्य ॥ ९ ॥

सख्यः! राजोपवेशार्हाः कुथाः प्रसार्यन्ताम्, याः किल वधूसविधमागच्छता राज्ञा पदाञ्चनैरलंक्रियेरन्। तत् प्रत्युद्गमार्थं आरभ्यतां वाद्यघोषः। (वाद्यं प्रवर्तते), (प्रभावतीं प्रति), स्मरासि किं कदाऽहं

श्रीनाथेन परिगृहीता । नूनं तदा त्वं तत्रैवासीः । तदा कन्याभावोचितचकितस्वभावाद्वा, भर्तृप्रीतिगौरवाद्वा, द्वितीयपुंव्यक्तिप्रथमदर्शनाश्चर्येणवा, मत्करस्थितं देवताभिषेकपात्रं, वेपमाने मत्करे, यदा व्यचलत्, तदा तत्र स्थितं मधु, स्फटिकशिलावत्याम् भूम्यां पतित्वा, असृङ्नदीव प्रावहत् किल ।

**प्रभावती**—तव प्रथमपरिणयपरिचितं साध्वसं साध्वहं स्मरामि ।

**कमला**—न तथा साध्वसं मे अस्मिन् द्वितीयपरिणये, पश्य यथाऽहं हस्तं प्रसारयामि ; कथमयमचकितो भवति ।

**प्रभावती**—नूनमयमचकितस्तं विदारयितुम् ।

**कमला**—जोषमास्व, स्थानमिदं निःशब्दं क्रियताम्, शङ्के एतादृशस्वैरप्रलापः अस्मद्भगवतीगौरवमालुंपेत । सौजन्यं प्रदर्शयत । ननु मन्द्रध्वनिः संवदति देवतायतनगाम्भीर्यं । भवतु साधयामस्तावत् कञ्चित्कालं विश्रान्तिमनुभवितुम् ।

(इति सखीभिः सह निष्क्रान्ता)

(इति तृतीयोंऽकः).

---

# चतुर्थोऽङ्कः

## प्रथमदृश्यम्—देवीसदनम्.

(पुनः प्रविशति ससखीजना कमला).

ततः प्रचलति देवीसेवकानामुत्सवः । बालिकाः पुष्पपात्राणि गृहीत्वा पुष्पाणि विकिरन्ति ॥

(तदा प्रविशति शीर्णाक्षः, कनकदामभूषितकिरीटं कौशेयाम्बरं चादाय, प्रबलानन्तानीकशिष्टाङ्गरक्षकमहाजनैरनुयातः)

कमला—स्वस्त्यस्तु राज्ञे ।

शीर्णाक्षः—स्वस्ति राज्ञ्यै । (सानन्दं) हे प्रिये! शृणु—

दैवान्मे भाग्यचक्रं चरति मम पदे ह्युन्नतेऽस्मिन्द्वितीये
सौवर्णं सौख्यरूपं यदि भवति भृशं दीयते तत्प्रजाभ्यः ।
आम्रद्रुच्छायदेशे समधरणितले भोज्यते मर्त्यवृन्दं
याथार्थ्याज्जीवितं मे यदिह सुखकरं प्रस्तुतं चित्रमद्य ॥ १

गतं सुदूरं गतवर्त्मतुल्यं
भूतं ममोपात्तसमस्तकार्यम् ।
पदं नु लब्ध्वा चिरकांक्षितं मे
कथं पुनस्तादृशचेष्टितं स्यात् ॥ २ ॥

किञ्च—

मरुतटमिव भूतं स्तम्बगुल्मप्रधानं
भवति पतदधोऽधो वीचिपातप्रवाहम् ।
स्फुरति तदिदमीषच्चालिते भङ्गजाले
सुखसमुदयनीरे शान्तचित्ते ममाद्य ॥ ३ ॥

नृपो भूत्वा स्वैरं वक्तुमनुचितम् । अहमद्य सुखभूमिः, भाग्यायतनं, प्रिये! मम वैभवेन त्वां भाग्यशालिनीं करिष्ये ।

कमला—तथैव महोदार!

शीर्णाक्षः—रम्यकसार्वभौमाज्ञया सर्वत्र निरङ्कुशप्रचारोऽपि मत्प्रियसुहृदयं अनन्तानीकः दाक्षिण्यात् अस्मत्परिणयमहोत्सवमीक्षितुमनुज्ञामवेक्षते ।

कमला—आगच्छत्वयं, यदीच्छेत् अनेन सह सैन्यव्यूहोऽपि। (अनन्तानीकं प्रति) प्रभो! अनन्तानीक! त्वदागमनेन इदानीमस्मद्देवीभवनमलंक्रियताम् ।

अनन्तानीकः—यथा संभावयत्यार्या ।

कमला—(शीर्णाक्षं प्रति) तिष्ठ त्वं वेदिकायाः अस्मिन् भागे । (अनन्तानीकं प्रति) अपरभागे स्थीयताम् । शीर्णाक्ष! भगवतीं लोकानुग्रहकारिणीं दाक्षायणीं प्रथमं प्रार्थयस्व ।

(सर्वे देव्या अभिमुखे तिष्ठन्ति। सेवकाः, कुमार्यः, महाजनाः, रक्षकाश्च दण्डप्रणाममाचरन्ति । इतरे तिष्ठन्तो भवन्ति)

शीर्णाक्षः—

मातस्त्वं प्राणबीजं कलयसि गुणतः क्रान्तजीवात्मतत्त्वं
प्रारब्धं शुक्लशोणप्रकृतिसुघटनात्तन्तुभूतं विधाय ।
गर्भस्थं मांसपिण्डं ह्यवयवसहितं प्राणितं पूर्णकायं
जातं तन्मातृगर्भाद्भुवि जनकमुदेऽपत्यसंज्ञं करोषि ॥ ४॥

बाल्ये क्रीडाविलासस्तदनु मतिहिता नीतिविद्यासु शिक्षा,
भोगे भावः सुखेच्छा विविधविषयतो यौवने वस्तुलोभः ।

भूगेहापत्यभार्यापशुमणिधनतो, वार्धके स्वास्थ्ययोगो
दिव्यं सौख्यं जनानां भवति तव कृपानुग्रहान्नित्यमि-
[त्थम् ॥ ५ ॥

निश्वासस्ते समीरो मधुररसभरश्छादयत्यद्रिभूमिं
घासैर्वृक्षैश्च वप्रं कुसुमफलभरैर्ग्रामभूमिं सुसस्यैः ।
चेतोमोदं समानं पशुपतगनरप्राणिनां सन्तनोति
प्रीत्यासक्तं समस्तं फलितपरिणयं देवि मां संतनुष्व ॥ ६

सर्वे—आर्तमातः! आर्तमातः! एनमाकर्णयाकर्णय ।

कमला—हे भगवति! आर्तमातः! आकर्णयाकर्णयैनमार्तस्वरम्, यतस्त्वं मदिष्टदेवता, अस्मद्ग्रामदेवता चासि । हे! मातः,

एतादृशीषु तव मूर्तिषु मूर्तिरेका
संहाररूपसुखदा कथिता वरिष्ठा ।
सा गर्भजन्मशिशुतान्यतमस्थजन्तुं
हा! हन्त हन्ति तरुणं जरठं तथैव ॥ ७ ॥

दुर्गे! त्वदीयमहिमा प्रतिभाति रुद्रे
यो मेघनादमरुदादिधृतोग्ररूपः ।
दुर्गं पुरं तरुगणान् भुवि सस्यवर्गा-
नुन्मूलयत्यविरतं प्रलयं वितन्वन् ॥ ८ ॥

महाघोररूपात्करोषि प्रशान्तं
जगद्ग्रामयस्यब्धिमध्ये समस्तम् ।
तदा कुत्र भूपस्तदीयं धनं वा
वृथा मोहपाशाज्जनः सज्जतेऽत्र ॥ ९ ॥

जयी नौप्रयायी निमज्जत्यथोऽब्धौ,
    जयस्तम्भयुक्ता यदा ग्रावभिन्ना ।
तरिस्तम्भकेतुप्रतिष्ठा विशाला,
    कथं वा प्रतिष्ठा भवेच्छाश्वतीह ॥ १० ॥

वेगाद्भूकम्पशक्तेर्भवति विदलितं क्ष्मातलं निम्नगर्तं
    वह्निज्वालावलीढो विकिरति भसितं ग्रावखण्डान्महीध्रः ।
धारासंपातशक्त्या भवति जगदिदं सर्वमेकार्णवं हा !
    त्वय्येवास्तं समस्तं जननि! परिणयं स्वेष्टसिद्धं
[तनुष्व ॥ ११ ॥

सर्वे—आर्तमातः! आर्तमातः! आकर्णयैनाम् ।

(तदा स्तनिताडम्बरस्सम्भवति । सर्वे उत्तिष्ठन्ति ।)

शीर्णाक्षः—किमिदं गर्जितम्! मयि राज्याभिषिक्ते, शैलेभ्योऽत्र झञ्झामारुतः प्रादुरभूत् । इयमिदानीं भयाद्विवर्णेवालक्ष्यते । मम कथं तथा भीः?

कमला—अद्यैव उपयमेच्छा ।

शीर्णाक्षः—तथैव नूनम् । कथं पुनः आर्तमातरं प्रति तव स्तुतिरपूर्वा ।

कमला—भो राजन्! न तु सर्वत्र शब्दानां वाच्यार्थ एव वक्तुरभिप्रायः । अहं तावत्सत्यव्रता ।

शीर्णाक्षः—भवत्याऽनुगृहीतोऽस्मि, महानयं प्रसादः ।

कमला—(अनन्तानीकमुद्दिश्य) भो! अनन्तानीक! रम्यायाः अस्मासु महानयं प्रसादः, यन्मम शिष्टं वैदेशिकविधिं सन्निधानेन वीक्षितुमनुमन्यसे त्वम् । (निवृत्य देवीमभितः वेदिकामारुह्य

पात्रमेकं गृहीत्वा अनन्तानीकाय प्रदर्शयति । अनन्तानीकोऽपि शीर्णाक्षस्याभिमुखं सोपानमूलमधिगच्छति) ।

**कमला**—प्रियप्रभो ! पश्येदं पानपात्रम् । (इति तस्मै ददाति) ।

**अनन्तानीकः**—अहह ! महदद्भुतमिदं देव्या आर्तमातुः स्वरूपं पात्रस्यास्य वहिर्गण्डाकारेण परिष्कृतं भवति । मह्यमिदं पुनः प्रदीयताम् ।

**कमला**—प्राचीनमिदं पात्रं, कदा वा निर्मितं न जाने, एतदस्मद्देवीभवनोपकरणं भवति । (पुनः वेदिकायां तन्निक्षिप्य, तीर्थपात्रमादाय) ।

पश्यापरमिदं पात्रम्—

शीर्णाक्षेण मुदा ह्युपायनमिदं देव्यै पुरा प्रेषितम्
तस्मै पूर्णरसं प्रसादवदिदं सैषा प्रसन्नाऽऽदरात् ।
पातुं दापयतीष्टदं परिणये श्रेष्ठोपहारायितम्
देवेभ्योऽत्र सुसाध्यते हितफलं श्रद्धालुभिस्सन्ततम् ॥११

**शीर्णाक्षः**—कमले ! प्रिये ! कमले ! कृतार्थोस्मि, भूयोऽनुगृहीतोस्मि ।

**कमला**—प्रियप्रभो ! शृणु—

चिरप्रवृत्तं भुविसम्प्रदायं
न लंघितुं सत्वरमर्हतीह ।
कालक्रमेणैव जनानुरोधान्नवी-
नरीतिं विनयेत्सुखाय ॥ १३ ॥

तस्मादस्माभिरप्यत्र निरन्तरप्रवृत्ताचारमनुसर्तुं योग्यम्, अत्रतु—

वृद्धाचारो वहति परमां गालटेयेषु निष्ठां
येन प्राप्तुं सुखमिह परं लब्धदांपत्ययोगात् ।

यावज्जीवं समधु पिबतो देवताराधनात्तम्
तीर्थं पुण्यं प्रियरसयुतं दंपती ह्येकपात्रे ॥ १४ ॥

सख्यः! परिणयोचितं अनर्घममृतमानयत ।

(ताः भृङ्गार्याममृतमानयन्ति).

कमला—(अमृतं पानपात्रे अभिस्राव्य, शीर्णाक्षं वीक्ष्य), पश्य! पात्रमिदं पूर्णं भवति । (अनन्तानीकं प्रति) प्रिय! महाभाग! किमिदं पिबासि?

अनन्तानीकः—अहं! कुतोऽहं पिबेयम्, नाहमधुना परिणेयः ।

कमला—अस्तु तावत्, यदि त्वमिदं पिबेः, तदा वयं रम्यायाः आशीर्भोजनं भवेमेति प्रदीयते ।

अनन्तानीकः—क्षन्तव्योऽहं भवत्या ।

कमला—सम्यगाचरितं त्वया, ममेयमाशीः शीर्णाक्षस्य च । पश्य! पश्य! प्रथमं तावद्देव्यै निवेदयामि । (निवेदयति) ।
अहमिदानीं पिबामि (पीत्वा पुनः पात्रं मधुररसेन पूरयति).

(शीर्णाक्षं प्रति) अयमिदानीं तव पर्यायः, पिब पिब यावदिष्टं पिब, अचिरात् फलीभविष्यत्यस्मत्परिणयः, पिब पिब, आपातं पिब, मां निर्वृतिभागिनीं करिष्यसि । (शीर्णाक्षः कमलासमीपमनुगच्छति, सा तस्मै तत् पानीयं प्रयच्छति, स पिबति) ।

शीर्णाक्षः—कमले! पश्य! यावत्पूरं पीत्वा, इदानीं पात्रं रिक्तं कृतं मया, तस्मिन् द्वित्रा एव बिन्दवोऽवशिष्टाः ।

कमला—देवतायै निवेदय । (शीर्णाक्षः अवशिष्टान् बिन्दून् वेदिकायां प्रक्षिप्य, पात्रं कमलाया हस्ते निक्षिपति)

कमला—(वेदिकायां पात्रं निक्षिप्य) भगवति दीयतामवधानं ।

(पीठमारोहति, अनन्तानीकस्तत्रायाति)

कमला—अनन्तानीक! षण्मासात् पूर्वं श्रीनाथस्य कृते, तवानुग्रहं याचितुं उषसि यदाहं देवीसदनमगमम्, तदा त्वं कुत्रासीः?

अनन्तानीकः—असौ त्वत्प्रार्थनाप्रसङ्ग एव न ज्ञायते किल मया।

शीर्णाक्षः—(सरभसं पीठसमीपमागत्य), तमन्वेष्टुं प्रयतितं मया, परन्तु स नेत्रगोचरो न बभूव। अलमनेन, प्रचलतु परिणयविधिः।

कमला—अनन्तानीक! (आकाशे) हा कमले!

कमला—केनाहूयते।

प्रभावती—न हि अत्र कोप्यस्ति।

कमला—ध्रुवं केनाप्याहूताऽहं! भवतु, अनन्तानीक! यदि श्रीनाथे आरोपितः रम्योद्दिष्टः कूटप्रबन्धः तव प्रत्ययपात्रमभूत्, तदा त्वं यावन्मरणं तमत्यन्तं पीडयितुमनाः किं?

अनन्तानीकः—

श्रीनाथे कपटप्रबन्धरचना रम्यार्थमाशङ्किता
यद्येवं न कृतं निहन्तुमथवा तं हिंसितुं मे मनः।
भूयस्तं परिपन्थिभावविमुखं कर्तुं सुबोधैर्मया
निस्तन्द्रं यतितव्यमेव समभून्नाशे कथं मे स्पृहा॥ १५॥

यदाऽभविष्यदादराद्धितोक्तिभिर्न नीतिमान्
सुरक्षितं हि रम्यया‌ऽऽत्त गौरवं तदा नु तम्।
निगृह्य रम्यकापुरे निरुध्य बन्धनालये
स्वकृत्यपालनादहं मुदं समैष्यमुत्तमाम्॥ १६॥

शीर्णाक्षः—कुतो विलम्ब्यते परिणयविधिः? प्रचलत्वयं प्रचलतु।

कमला—स समासः ।

शीर्णाक्षः—कथम् ?

कमला—मन्निवृतये त्वया धीरममृतपानं कृतं नु, त्वदस्थिगतो मे प्रीतिरसः, किं नावबोधयसि तत्प्रचारमिदानीम् ?

शीर्णाक्षः—

अस्थिन्यस्थिन्यस्ति प्रीतिस्त्वत्सम्बन्धात्क्रान्ता काये ।
कल्याणं नो भूयाद्भूम्यां सौख्यं भूयोऽपेक्षे कान्ते ॥ १७ ॥

सम्यक्प्रस्तूयतां परिणयविधिः,

गालव्याढ्यो भूपो राज्ञ्या पाणिं गृह्णात्यद्य प्रीत्या ।
अग्रे देवानामुद्वाहो भूयादाशीर्वादैः पूर्णः ॥ १८ ॥

भाग्यदेवतायाः प्रसादेन शीर्णाक्षस्य प्रथममहिष्या कमलया सह प्रवर्तमानस्य महोत्सवस्य ज्ञापनार्थं एतद्देशसंप्रदाये कश्चिद्विशेषः प्रतिष्ठाप्यते यत्परिणयोचितानि श्वेतपरिधानानि सुवर्णरेखाङ्कितानि भवन्ति । (सकम्पं) हा! यातना! यातना! हा! हतोऽस्मि! किमियं वेदना? हा! हा! पुनरपि मां व्यथयति वेदना! वेदना! एतादृशवेदना गतहायने रम्यायां मयाऽनुभूता, सत्यं सत्यम् । अनन्तानीक! देहि मे करावलम्बं, यदा अचिरादियं निर्गच्छति तदा मे सुखं भवति । इदानीं मोदावहे काले अहं प्रहर्षितोऽपि भ्राम्यति मे शिरः, कुरुत कुरुत राज्ञ्यै किरीटधारणम् । तूर्णं! तूर्णं! हा! विधे! कुतस्तेऽयं विलासः, हा! देवाः! किमिदं नैर्घृण्यम्! दिवस्पते! दिवस्पते! कुत्रासि! हा! हा! हा! (इति पृष्ठतः पतति) ।

कमला—गाल्टेयोऽसि त्वम्, । किमिदं रम्यकदेवतानामाह्वानम्? सत्यमस्मदार्तमाता दुर्गास्वरूपा संवृत्ता ।

शीर्णाक्षः - (भूम्यां पतित्वा) हा! विषेन मारितोऽहम् । सा, सा, सा, कवाटं बन्धय! न पलायत्वेषा ।

कमला—(पीठमालम्ब्य) किं त्वया सह एकस्मादेव पात्रान्न मया पीतम्?

शीर्णाक्षः—पश्यन्तु देवाः! इदं विश्वमत्र साक्षी, साऽपि कमलाऽपि, किमियं वधूः? कथं राज्ञी? अतिघोरम्! हा! हतोस्मि तया यस्यां मे प्रणयोऽभूत् ।

कमला—ममापि प्रेम तस्मिन्नेव ।

शीर्णाक्षः—हा! राक्षसि! प्राणहारिणि! उन्मादकारिणि! मर्षय! मर्षय! दयनीयोऽहम्! उद्धारय माम्, सञ्चारय किञ्चित्कृपया, सञ्चाराद्विषवेगो ह्रस्वीक्रियत इति श्रूयते । (अनन्तानीकः प्रबलश्च तमुत्थापयतः)। पादयोः पर्वतपातेनेव गुरुत्वमनुभवामि, न चलितुं शक्नोमि, पतामि, हा! हा! अवलम्बनं, अवलम्बनं, उत्सृजत, निरालम्बो भवामि, हा! हा! हा! (ताभ्यां विसृष्टः भूम्यां पतति) अतीतोऽसौ कालः, बुद्धिमानपि प्रमदया वञ्चितः। अनन्तानीक! अहं रम्याज्ञापरिपालने अतीव श्रद्धालुरिति तस्यै निवेदय । तस्यामपि प्रणयपालको भवितुं—यदि—यदि सा कृतज्ञा—(मृत इव पतति)

कमला—तत्समीपमागत्य, (साधिक्षेपम्) ईदृशस्तेपातः अचिरादधिगतसिंहासनस्य ।

शीर्णाक्षः—सिंहासनं! का वा तव शक्तिः सिंहासनमलंकर्तुम् । विधि-

रेव प्रगल्भः, न त्वावां। इदानीं मन्नाशे त्वन्नाशे च न कोप्या-वयोरपराधः। कमले! मम मार्गमेवानुसरसि. साध्वभिवन्द्यसे, (प्रबलमाहूय) हे प्रबल! दुस्सहोयं विषवेगः मामन्तर्नय तत्र शय्यां रचय (सुखं तावत्तामधिशेये)।

प्रबलः – तथैव, (इति शीर्णाक्षमन्तर्नयति)। (नेपथ्ये—हा! अत्याहितम्)

कमला—(प्रलपन्तीभिस्सेवकाभिरुत्तानिता), त्वन्मार्गम्! मनुजा-धम! कीटसदृश! अधोबिलं कीट इव सर सर रौरवं नरकं; विश विश अन्धंतमः। अनन्तानीक! किं सान्निध्ये भव-त्ययम्? अस्याप्येतादृशाधोगतिर्मयाऽऽकांक्षिता, शान्तं पापम्, शान्तं पापम्; तस्याद्य उत्तमा गतिर्भूयात्, यतः, यदि मद्देशीयाः रम्यानियोगमर्हन्ति तदा दाक्षिण्यात् स साधुशीलो भवति किल। (ससखीजनबाह्वालम्बं पतति)

अनन्तानीकः—कमले। त्वं प्रजानुरागवती, जनवत्सला च भवसि, रम्यकोऽप्यहं त्वयि कृतक्षमोऽस्मि।

कमला—(स्वयमुत्थाय), अङ्गनाः! (आकाशे, 'कमले! कमले!')

कमला—किमिदं पुनरपि कोऽपि मामाह्वयति।

अङ्गना रम्यका अत्र वश्शासका
वीक्षितुं दिष्टतो नात्र मे जीवितम्।
मङ्गलं मृत्युतस्साधुभिर्दर्शितं
तत्पदं याम्यहं हा! विषान्मारिता॥ १९॥

(पुनः पृष्ठतः पतति),

मकुटं शिरसा धृतं नु किं
गलितं ध्वान्तमथ द्रुतोऽनिलः।

उदिता नु समं प्रभाऽपि मां
सुलभेनाद्य नयेत् पथाऽर्चिषा ॥ २० ॥

इदानीं—

पतिं प्रत्युद्गन्तुं सुफलितमताऽहं विजयिनं ।
प्रियं श्रीनाथं तं तरणिसमयानात्प्रमुदिता ॥
प्रयाम्यार्ता लोकं सततसुखभोग्यं दिविषदां ।
भवाम्भोराशिं नौस्तरतु सुलभं मे विधिफलम् ॥ २१ ॥

कुतो मे कान्तः मां प्रत्युद्गन्तुं विलम्बते, किरीटस्य कृते तस्याक्रोशो नु। किं करोमि! किरीटमवरोहयितुं मम हस्तौ न शक्नुतः (प्रभावती किरीटमवरोहयति) (किञ्चित्सुखं नाटयित्वा) कस्यायं स्पर्शः (वाहू प्रसार्य उत्तिष्ठति)।

संपद्ये श्रीनाथं कान्तं मे तीरस्थमू ।
भास्वन्तं सन्मित्रं सान्निध्यादाहूता ॥ २२ ॥

(आकाशे जयजयध्वनिः, दुन्दुभिनादश्च श्रूयते, पुष्पवृष्टिः प्रादुर्भवति)

प्रभावती—सख्यः! आगच्छत! आगच्छत! कामलामन्तर्नीत्वा यथोचितमुपचराम (सर्वाः तथा कुर्वन्ति)।

(नेपथ्ये— हा! कमला दिवं गता! श्रीनाथमनुगता।)

## द्वितीयदृश्यम्—देवीसदनप्रान्तदेशः.

(ततः प्रविशन्ति प्रभावती सख्यश्च).

प्रभावती—हा! सख्यः हतास्स्मः, किमप्यविचिन्तितमापतितं, अस्मत्सखी कमला विषवेगेन त्यक्तासुर्दिवं गता, हा! विधे! अद्भुतस्तव व्यापारः।

**सख्यः**—वयं मन्दभागिन्यः ! प्रभावति ! कुतः प्रलपसि ? तादृश-साध्वीजनस्य संगः कथमस्माभिः सुचिरमनुभूयेत ? जहि जहि विषादं, व्यसनमिदं त्यज, आयाहि, गच्छामस्तावत् महा-भागायाः पुण्यानद्यास्तीरं। तत्र स्नात्वा, अस्मत्सख्यै धर्मोदकं दत्वा, साधूनां तापसजनानां दर्शनेन गतशोका भवाम ।

**प्रभावती**—तथैव करवाम ।

(सर्वाः पुण्यानदीमनुगच्छन्ति)

इति चतुर्थोऽङ्कः.

---

# अथ पञ्चमोऽङ्कः

## प्रथमदृश्यम्—पुण्यानदीप्रदेशः.

(तापसजनाः, सिद्धपुरुषाः प्रमदादयः, पुण्यानद्यां स्नानाह्निकक्रियाः आचरन्ति)

**प्रभावती**—तरङ्गिणीं दृष्ट्वा (सहर्षम्)

स्रवन्तीयं साक्षादमरतटिनीवातिरुचिरा
वहन्ती पाथोधिं शुचिजलसुपूरा हितकरी ।
जनानां सौहार्दं जनयति सुमोदं जलरुहैः
प्रपूर्णा पुण्याऽहो शमयति ममेमां हृदि शुचम् ॥ १ ॥

(तत्र योगिनी नाम काचित् सिद्धाङ्गना, सखीभिः परिवृतां प्रभावतीं दृष्ट्वा)

**योगिनी**—नमो वः सखीभ्यो दाक्षायणी सेवकाभ्यः ।

**सर्वाः**—नमस्ते महाभागे! नमस्ते ।

**योगिनी**—प्रभावति! कुतोऽत्र युष्माकमागमनं?

**प्रभावती**—भवादृशां महात्मनां दर्शनार्थं ।

**योगिनी**—को वा विशेषः सखीजननिवासभूमिषु भगवतीभवनप्रान्तेषु?

**प्रभावती**—महान्, विशेषोऽस्ति यच्छ्रवणेन भवत्या अपि हृदयं विदलितं भवेत् ।

**योगिनी**—उच्यताम्, उच्यताम्, साध्यं चेत्प्रतीकारमन्विष्याम ।

**प्रभावती**—श्रूयतां तापसोत्तमे! गालटेयाधीशस्य श्रीनाथस्य राज-

महिषी कमला शीर्णाक्षकृत्यादनाथीभूता अस्मद्देवीसदनं शरणं गता ।

**योगिनी**—तदनु ?

**प्रभावती**—तदनु किं परं वच्मि, सा शीर्णाक्षं गतासुं कृत्वा, स्वयमपि विषपानेन दिवं गता ।

**योगिनी**—अहो ! मे स्वप्नदृष्टस्य सत्यता ।

**प्रभावती**—भवत्या स्वप्ने किं दृष्टं कथ्यताम् ।

**योगिनी**—यमालये शीर्णाक्षेण यदनुभूतम् ।

**प्रभावती**—अस्मास्वनुग्रहवती तत्प्रकारान् विशदयितुमर्हति भवती ।

**योगिनी**—श्रूयतां तर्हि ।

(प्रभावती, सख्यश्च) अवहितास्स्मः ।

**योगिनी**—शीर्णाक्षः यदा मर्त्यलोकं तत्याज, तदा यमभटाः, तं पाशैर्बध्वा पृष्ठतो गलतश्च मुष्टिभिस्ताडयित्वा धर्मराजनिकटमनयन् ।

**प्रभावती**—तदनु तदनु ।

**योगिनी**—तदनु शमनः, धर्मस्थाने दिव्यसिंहासनारूढः, धर्माधिकारे नियुक्तान् चित्रगुप्तादीनाहूय, तन्मुखात् शीर्णाक्षकृतानि सुकृतदुष्कृतानि सम्यगशृणोत् ।

**प्रभावती**—ततः ।

**योगिनी**—अनन्तरं शीर्णाक्षः कृतान्तेन नितान्ततर्जनपुरस्सरं एवं पृष्टः अनुरूपमुत्तरंच दत्तवान् । यथा—

**यमः**—

शीर्णाक्ष त्वं सुकृतविमुखः क्रूरकृत्यादरोऽभू-
द्भूम्यां घोरं विहितमनिशं दौष्ट्यमेव त्वयाऽलम् ।

पातिव्रत्यं सुनिहतमहो शिष्टसाध्वीजनानां
स्वामिद्रोहः कपटनिकृतिस्साधुहिंसा तवाभूत् ॥ २ ॥

किं तथ्यमङ्गीकरोष्येतानि त्वत्कृतदुष्कृतानि ?

शीर्णाक्षः—सर्वज्ञेषु कथमतथ्यभाषणं, यदुक्तं भवता सत्सर्वमप्यङ्गीकरोमि, मया किल,

भूयस्यस्सुभगाङ्गना व्रतपरा भर्तृष्वलं दूषिता
रम्या सा बहुवञ्चिता बहुविधा चेष्टाकृताऽसत्यतः ।
श्रीनाथे कमलापतौ कुमतितः कृत्यं न साध्वाहितं
कारुण्यान्मम शिक्षणे शमन ते कुर्याः प्रमाणं वचः ॥ ३

यमः—भोः ! शीर्णाक्ष ! यत्सत्यं त्वया नापह्नुतं, तत्त्वयि एषोऽनुग्रहः । न केवलं त्वं दुष्कृतभूयिष्ठः, कतिपयविषयेषु सुकृतमप्याचारितवान्, परम्, सुकृतदुष्कृतपरामर्शे दुष्कृतान्येव तुलायां भारमारोहन्ति । तस्मात् तत्फलानुभवविषये कतरस्मिन् ते प्रथमोऽभिनिवेशः ?

शीर्णाक्षः—दुष्कृतफलादनन्तरं सुकृतफलमनुभवितुमुचितमिति मन्ये ।

यमः—तर्हि अनुभूयतां प्रथमं यथायोग्यं दुष्कृतफलम् ।

शीर्णाक्षः—यथाऽऽज्ञापयति दण्डधरः ।

प्रभावती—मातः ! अयं हि स्वप्नदृष्टवृत्तान्तः । स्वप्नस्य प्रादुर्भावः कथम् ? स्वप्नदृष्टस्य सत्यता वा कथम् ?

योगिनी—श्रूयताम्,

जाग्रत्सम्बन्धिकार्यैर्मनसि सुनिहिता वासना वृत्तिजन्याः
प्रारब्धैः स्वसञ्चितैर्वा ह्यहमहमिकया शश्वदुद्बोधयोगे ।
सङ्क्रामन्त्यक्रमेणाद्भुतनवविविधाकारवस्तूनि चित्ते
यावत्कामं सृजन्ति प्रशिथिलवितथं स्वप्नदृष्टं तदाहुः ॥ ४

अपि च—

वासनानां यदा तासां क्रमाद्योगो भवेत्तदा ।
स्वप्नदृष्टं भवेत्सत्यमिति शास्त्रविदो विदुः ॥ ५ ॥

अपि तु—

पित्तप्रकोपादिविकारजातं
दुस्स्वप्नसुस्वप्नसमीक्षितं यत् ।
नैमित्तिकस्यास्य कुतो नु सत्वं
तत्सर्वमर्थं वितथं वदन्ति ॥ ६ ॥

प्रभावती—भो ! तपस्विनि ! कथमिदं संपद्यते ? कतिपयदिवसेभ्यः प्राक् प्रवृत्तशीर्णाक्षवृत्तान्तः भवत्या न दृष्टः, नापि श्रुतपूर्वः । तस्मादयमिदानींतनजन्मनि प्राग्जन्मसु वा भवत्या नानुभूत-विषयः । अपि च पर्णफलाशनवृत्तीनां भवादृशां पित्तप्रकोपादि-संभवे, न काऽपि संभावना । एवं सति एतादृशस्वप्नानुभवे को हेतुः ? कथयतु भवती ।

योगिनी—निपुणं निरूपितं त्वया, सुष्ठु भणितं, शृणु—अस्ति खलु अपरोऽपि हेतुः स्वप्नसंभवे । यदा चित्तं प्रशान्तं निर्मलं च भवति, तदा केनापि कारणेन अदृष्टाश्रुतपूर्वस्य यस्य कस्यचिद-द्भुतव्यापारस्य वासनानुषङ्गो मनसि संभवति । ऐकाग्र्य-भावनादशायां बाह्यविषयकवृत्तीनां तिरोधानात् स्वप्नसमये अद्भुतव्यापारवासनावृत्तिः प्रविलसति । एतादृशः स्वप्नः कादा-चित्कः केषाञ्चिन्महात्मनामेव संभवति, न तु सर्वप्राणिनाम्, अलमनेन स्वप्नविचारेण ।

प्रभावती—भो ! योगिनि ! यदि भवती प्रभवति, कथ्यताम् । किं नु शीर्णाक्षः सुकृतदुष्कृतफलानुभवाय, श्वसूकरादिजन्मानि प्राप्नोति,

आहोस्वित् यमालय एव घोरतरां यातनामनुभवति ?

**योगिनी**—कुतस्ते तद्विचारः ?

**प्रभावती**—जन्मभिः कृतानां पुण्यपापानां फलानि किं स्वर्गे नरके च अनुभूयन्ते ? उत पुण्यपापोचितानि जन्मान्तराणि लब्ध्वा अनुभूयन्ते इति मे वितर्कः। तस्मात्पृच्छामि, मर्षयतु महाभागिनी भवती।

**योगिनी**—प्रियसखि! प्रभावति! अयं धर्मसूक्ष्मविषयः न मया प्रतिपादयितुं शक्यः।

**प्रभावती**—तर्हि कोऽस्त्यपरस्तत्प्रतिपादनक्षमः ?

**योगिनी**—अस्ति कश्चित्त्रिकालज्ञः सिद्धपुरुषः, एतत्पुण्यानदीतीरोपकण्ठाश्रमवासी, तन्निकटं गच्छाम। प्रायशः तव वितर्कं परिहर्तुं स शक्नुयात्।

**प्रभावती**—तथैव गच्छामः।

(इति सर्वा निष्क्रान्ताः)

द्वितीयदृश्यम्—पूर्णानदीतीरे सिद्धाश्रमः.

(ततः प्रविशन्ति योगिनी, प्रभावती, सख्यश्च)

(सिद्धपुरुषं दृष्ट्वा)

**योगिनी**—अभिवादयेऽहं योगिनी।

**सिद्धपुरुषः**—निखिला योगसिद्धिस्ते भूयात्।

**प्रभावाती**—महापुरुषमभिवादये।

**सिद्धपुरुषः**—सर्ववितर्कशून्या भवतु ते चित्तवृत्तिः।

**सख्यः**—वयं तपस्विजनमभिवादयामहे।

सिद्धपुरुषः—युष्माकं यथाभिलषितकार्यसिद्धिर्भूयात् ।

योगिनी—हे तपस्विन्—

पुण्यपापफलप्राप्तिः किं नु जन्मान्तरे विभो ।
उत स्वर्गे नारके च संशयं छेत्तुमर्हसि ॥ ७ ॥

सिद्धपुरुषः—इति किं तव संशयः ।

योगिनी—न केवलं मम, अपि तु सर्वासामस्माकं, प्राधान्येन प्रभावत्याः ।

सिद्धपुरुषः—तर्हि श्रूयताम्—

आर्यैरेतत् सम्यगुक्तं प्रसिद्धं
"क्षीणे पुण्ये मर्त्यलोकं विशन्ति" ।
तस्मात् पुण्यं पापमप्यत्र लोके
भोज्ये तावद्योजयेद्द्विप्रकारम् ॥ ८ ॥

प्रभावती—अहो! धर्मव्यतिरेकः एकापराधस्य कृते द्विवारं शिक्षण-विधानं न कुत्रापि श्रूयते ।

सख्यः—एतत्तत्वविमर्शः, न कथमप्यस्माकं बुद्धिमारोहति ।

योगिनी—भो तापसोत्तम! कथमिदं सङ्गच्छते । यतः—

कपूयशीला मृगकीटजन्म
द्विजादिभावं रमणीयशीलाः ।
गच्छन्ति लोकेष्विति तत्वविद्भिः
प्रदर्शितं वेदशिरस्सु तत्वम् ॥ ९ ॥

सर्वाः—एतदेव पुनर्विस्मयं जनयत्यस्माकम् ।

सिद्धपुरुषः—

किं वा विस्मयकारणं भुवि यदा स्थूलाच्छरीराद्गतो
जीवो लिङ्गशरीरकेण सहितो मात्रांशकैर्वासितः ।

सक्तः कर्मजवासनापरिकरैः कालेऽनुभूय क्रमात्
तत्तल्लोकफलान्यसौ समुचितान्यत्रापि जायेत वै ॥

यथा विविधवस्तुजातलुब्धो जनः, तत्तद्वस्तुप्रभवप्रचारार्हप्रदेशान् प्राप्य, स्वेष्टसंपादको भवति, तथैव यानि कर्मफलान्यत्रानुभवितुमशक्यानि, तानि तदनुकूलेषु लोकान्तरेष्वेव जीवोऽनुभवति। यानि पुनरत्रानुभवितव्यानि तत्कृते जन्मान्तरप्राप्तिरित्येतद्धर्मसूक्ष्मप्रदर्शनं। अलमनेन वितर्केण। भो! योगिनि! का इमा ललनाः? किं निमित्तमासां मुखेषु किंचिद्वैवर्ण्यं दृश्यते?

योगिनी—इमा दाक्षायणीपरिचर्यापरायणाः ललनाः, स्वसखीवियोगनिमित्तं खलु आसां मुखवैवर्ण्यं। यतः—

अनुभवति सुयोगे प्रेमभारात्स्वबन्धो-
र्जगति मुदमपारां दुःखमुग्रं वियोगे।
प्रकृतिरियमुदारा सज्जनानां प्रसिद्धा
ह्युदयपिहितभावात् पद्मिनीवात्मभर्तुः ॥ ११ ॥

सिद्धपुरुषः—योगिनि! कथय कथय का वा सा नारीमणिः, यस्या वियोगादासां साध्वीनां मुखचन्द्रः परिम्लानो भवति।

योगिनी—किमिदमाश्चर्यमुच्यते, किं वात्र विद्यते यन्महात्मभिर्न बुध्यते। अनुयोगमुखेनैव वियोगास्पदव्यक्तिविशेषज्ञानं सूचितं ननु।

बाह्यव्यापारशून्ये शमदमविभवे साधुवृत्ते यताक्षे
योगिन्यैकाग्र्ययोगान्निखिलजगदिदं भावि भूतं विभाति।
तस्मात्त्वं योगदृष्ट्या प्रकृतजनगतिं संविभाव्याथ ताभ्यो
वक्तुं शक्तः प्रभो यास्सुजनपरिचयाद्धन्यवादप्रसक्ताः॥ १२

सिद्धपुरुषः—ईषन्निमीलिताक्षः, किंचिन्निध्याय किमेताः कमलायाः सुहृदः ?

सर्वाः—सत्यं सत्यम् ।

सिद्धपुरुषः—किं नु सा शीर्णाक्षेण वंचिता ऐहिकव्यापारात्पराङ्मुखी बभूव ?

प्रभावती—सत्यमाह भगवान्, कथयतु किमापतितं मम सख्याः कमलायाः ?

सख्यः—प्रभावति ! कुतः पृच्छसि किमापतितमिति, अस्मत्सख्याः यदापतितं तत्त्वया सुसमीक्षितं किल ।

प्रभावती—मर्षयत मर्षयत सख्यः, स्नेहोद्रेकात् प्रष्टव्यम् विस्मृतमभूत् । भो महाभाग ! त्यक्तजीवितायाः कमलाया वृत्तान्तं सम्यग्योगदृष्ट्याऽवबुध्य कृपार्द्रचेताः अस्मभ्यं कथयितुमर्हति भवान् ।

सिद्धपुरुषः—(पुनः ध्यात्वा) अहो साधूनां माहात्म्यम् वचोभिः शंसितुं न शक्यते । अहह ! कियद्वा पुण्यमाचरितं श्रीनाथेन ? कीदृग्वा भाग्यशालिनी सापि कमला ?

योगिनी—तयोर्वृत्तान्तमेवाऽऽकर्णयितुमुत्सुका वयम् ।

प्रभावती—महापुरुष ! मत्सखीवृत्तान्तेन मां धन्यां कुरु ।

सख्यः—भो तपस्विन् ! कथय यत् प्रवृत्तं कमलाश्रीनाथयोः ।

सिद्धपुरुषः—भो योगिनि ! प्रभावति ! सख्यः ! अवहिता भवत ।

सर्वाः—साध्ववहिता भवाम ।

सिद्धपुरुषः—यदाऽत्र प्राणैर्वियुक्ता कमला, तदैव धर्मराजः स्वयमेव तदन्तिकमागत्याब्रवीत् ।

सर्वाः—कथय ! कथय !

सिद्धपुरुषः—' हे कमले ! त्वं साध्वीमणिरसि ? ममदर्शनेनैव त्वत्कृतः सर्वोऽपराधः प्रणष्टोऽभूत् । त्वं स्वर्लोके निजनाथमनुगन्तुमर्हसि । तस्मादिमं दिव्यविमानमारुह्य, विद्याधरैः कृतपरिचर्या, पुरन्दरपुरं पुण्यपथेन प्रयाहि ' इति ।

प्रभावती—एतदाकर्ण्य मत्कर्णविवरं विस्तृतं भवति । प्रसीदतु भवान् ।

सिद्धपुरुषः—विद्याधरैः परिवृता सा कमला, स्वर्गद्वारेऽप्सरोभिः अमरगणैश्च सार्धं श्रीनाथेन प्रत्युद्गम्य, महेन्द्रस्य सभामण्टपमनीयत ।

योगिनी—अहो ! पुण्यपरिपाकः, श्रीनाथस्यापि तत्रैव स्थितिः ।

प्रभावती—कथं श्रीनाथस्य स्वर्गप्रवेशः ?

सिद्धपुरुषः—

अल्पदोषगुणाधिक्यन्यायात् पापफलात्परम् ।
स्वर्गे पुण्यफलाद्वासः श्रीनाथस्य व्यधीयत ॥ १३ ॥

प्रभावती—कृपया कथ्यताम् कथमासीत्तदानीं इन्द्रसभा ।

सिद्धपुरुषः—(नेत्रे किंचिन्निमील्य), पश्यतैषा इन्द्रसभा, समस्तगन्धर्वविद्याधराप्सरोभिरलङ्कृतायां देवसभायां, देवर्षिभिस्तूयमानः, देवाङ्गनाभिर्गीयमानः, वन्दिमागधैः प्रशस्यमानः, शच्या सार्धं दिव्यसिंहासनमलंकुर्वन् महेन्द्रो दिगिन्द्रेभ्यस्तत्तदधिकारकार्यक्रममवगत्य सन्तुष्यति ।

सर्वाः—तत् कथं कथं ? कथय कथय ।

सिद्धपुरुषः—श्रवणाद्दर्शनं बलीयः खलु, तदिदं सिद्धाञ्जनं युष्मभ्यं ददामि यद्विलेपनेन नेत्रयोः, परोक्षं प्रत्यक्षमिव दृष्टिगोचरं भवेत् । (इति सिद्धाञ्जनं ददाति—ताः सर्वाः स्वस्वनेत्रयोः सिद्धाञ्जनं विलपन्त्य एव दिव्यदृष्टयो भूत्वा) ।

सर्वाः—भो ! महात्मन् ! कृतज्ञास्ते वयं, यत्प्रसादादस्मत्सखीमहोत्सवं दिव्यं समीक्षितुमलं प्रभवाम ।

सिद्धपुरुषः—पश्यत ! यदिदानीं अमरेन्द्रसभायां प्रचलति (सर्वाः पश्यन्त्यस्तिष्ठन्ति) ।

महेन्द्रः—(इन्द्रसभायां) भोः ! प्राग्दिक्परिपालक ! तवशासनप्रकारं संग्रहेणावेदय, (प्राग्दिशि नियुक्तो भूपः महेन्द्रमभिवाद्य प्रशंसति) ।

प्रागीशः—भो त्रिदिवेश !

प्राग्देशरक्षा तव शिक्षणान्मे
प्राशस्त्यमाशासु तनोति शुभ्रम् ।
यत्सृष्टिवर्गास्सकलास्सुखेन
त्वत्पादसेवानुरता भवन्ति ॥ १४ ॥

महेन्द्रः—भृशं तुष्टोऽस्मि सदा श्लाघ्यसे त्वम् । भो भूतहितचिन्तक ! आयुरारोग्यदायिन्, बृहद्भानो कस्तव वृत्तान्तः ?

अग्निः—(प्रणम्य) श्रूयतां त्रिलोकसाम्राज्यलक्ष्मीनिवासेन—

सर्वद्रव्यान्तरेषु स्वयमनिशमलं व्याप्य तेषां समृद्धे-
रोजस्तेजोऽतिसत्वं विदधदहमहोरात्रमप्यादरेण ।
सर्गं सर्वं तनोमि त्वदधिगतबलाद्दुष्टनिर्यासपूर्वं
योगे क्षेमे नियुक्तो विगतभवभयं सर्वदातुष्टपुष्टम् ॥ १५ ॥

महेन्द्रः—भूयो भूयः संप्रमोदे, सत्यं त्वं वैश्वानरोऽसि । भो दण्डधर ! त्रिजगद्धर्मपालक ! तवाधिकारसरणिः कथं वर्तते ?

यमः—आवेद्यते वज्रिणे प्रभुवर्याय—

पुण्यापुण्यविचारशासनमिदं संश्रूयतां प्राणिभि-
र्नित्यं रागवशात्कृतान्यवहितः कर्माणि सर्वाण्यलं ।

बुध्वाऽलं विदधामि धर्मपुरतः कर्मानुरूपं फलम्
निश्चौर्यं हि विषादभीतिरहितं विश्वं तवानुग्रहात् ॥ १६ ॥

महेन्द्रः—साधु धर्मराज ! साधु। हे कोणप ! समस्तदुष्टजनमर्दन-निपुण ! तवशासनं कथं निरूढं भवति ।

नैऋतः—

मघवन् शृणु मत्कार्यं त्रिजगत्पालनक्षमम् ।
दुष्टा हता गता भीतिः सर्वे सन्मार्गचारिणः ॥ १७ ॥

महेन्द्रः—आः ! सत्यं स्वाधिकारे समर्थोऽसि। हे वरुण ! निखिल-विद्यानीतिधर्मव्यापारपरायण ! किमुच्यते त्वया ?

वरुणः—भो प्रभो ! सम्यगवधार्यताम्—

विद्यानीतिविनीतधर्मनिरतास्सन्मार्गसंसेवका-
स्सर्वे साधुपरोपकारमतयो निर्व्याजवात्सल्यतः।
लोकाश्शोकविवर्जिताः सुचरितास्तुष्यन्ति सत्वान्विता-
श्श्रेयः प्रार्थनया परस्परमयं मच्छासनात्तक्रमः ॥ १८

महेन्द्रः—हे वरुण ! भृशं प्रशंसे तव प्रभुत्वशक्तिम् । हे सदागते ! सकलदेशपर्यटनक्षम ! समस्तवस्तुप्रसरणकुशल ! कीदृशी तव प्रजापरिपालनरीतिः ।

पवनः—भो महेन्द्र ! शृणु—

सर्वे मार्गास्सुगम्या विगतमृगभयास्सेतुयुक्तास्तटिन्यो
देशाद्देशं विनेया सकलजनहिता वस्तुसंभारभूतिः ।
कालादल्पाद्यथेष्टं जनततिरनघं धीरमाप्नोति लाभं
श्रेयोऽवाप्तं समस्तं त्वयि भवति सदा राज्यतन्त्रे प्रमाणे।

महेन्द्रः—सम्यक् प्रशंसनीयस्ते व्यापारः । हेधनाधिप ! निखिल-

जनहितार्थदायिन्! त्वदधिकारप्रचारः प्रजानां महते श्रेयसे भवतीति मन्ये।

कुबेरः—श्रृणु वासव!

पूर्णा तूर्णं धरित्री नवनिधिनिभृता सर्वसस्यैस्समाढ्या,
सौख्यावासो जनानां त्वमसि हि मम किं शासनं श्लाघ्यतेऽत्र
कोऽसौ दृष्टो दरिद्रो धनचयमहितः प्राणिवर्गो नितान्तं।
मोदो भूतेष्वमोघः प्रचयगतधनै राष्ट्रकोशः प्रपूर्णः॥

महेन्द्रः—हे राजराज! अतीव सन्तुष्टोऽहं। श्लाघ्यस्तेऽधिकारः। हे ईशान! समस्तशुभोदर्कसंपादक! तव प्रभावः सर्वदा-प्रशंसनीय एव।

ईशानः—निवेद्यतेऽद्य वृद्धश्रवसे।

ऋतूनामुच्छ्रायो भवति हि सुवृष्टिस्सुसमये
जनानामामादो नियतसुखदस्साधुविहितः।
स्वकर्मस्वौत्सुक्यं सुकृतपरिपाकेन महता
नवीभूता सृष्टिः फलति निखिलेच्छा तनुभृताम्॥

महेन्द्रः—कृतार्थोऽस्मि! त्वदीयजगत्पालनरीतिरन्यादृशी। भो राज-सचिवाः! यूयं दिगीशा इति कर्तव्याधिकारप्रयुक्तदिग्वि-भागास्सन्तः, सर्वेऽपि सर्वभूतहितचिन्तकाः। एवं व्यष्टिशः कृतैर्युष्मद्व्यापारैः, समष्टितो मच्छासनं त्रिजगत्पालनक्षमं भवति।

(सिद्धपुरुषः लोचने उन्मीलयति)

(तदा सर्वास्त्यक्तासिद्धाञ्जनप्रभावाः प्राकृतदृष्टयो भवन्ति)

प्रभावती—अहह! देवलोकवैभवं, मनसाप्यवगन्तुमविषयं। तैः कीदृग्वापुण्यं क्रियते यैरेतादृशं दिव्यसौख्यमनुभूयते।

**सख्यः**—महेन्द्रसभासन्दर्शनेन नितान्तं विस्मिताः सन्तुष्टाश्च भवामः ।

**योगिनी**—स्वामिन्! अस्तु तावदिन्द्रसभासौभाग्यं, तत्र किमायातं कमलाश्रीनाथयोः, कृपया कथ्यताम् ।

**सिद्धपुरुषः**—किमायायात्, तयोरपि कल्याणमेव ।

**प्रभावती**—तत् कथं विशदयतु भवान् ।

**सिद्धपुरुषः**—पुनः किंचिद्ध्यात्वा, शृणुत! महेन्द्रः स्वनगरे कोविशेष इति तस्य मन्त्रिपुंङ्गवं पृच्छति ।

**योगिनी**—ततः ।

**सिद्धपुरुषः**—ततः साधुशिखामणिः श्रीनाथः, साध्वीमणिः, कमला च तव सन्निधिं समायात, इति अमात्यधुरीणेन विज्ञापितो भवति महेन्द्रः ।

**प्रभावती**—साधु! साधु! भगवन्! तपोनिधे! अतः परं योगदृष्ट्या यथा ज्ञायते तथैवोपपादयास्मभ्यः ।

**सिद्धपुरुषः**—पुनरपि एतत् सिद्धाञ्जनं तुभ्यं ददामि । नेत्रयोस्तद्विलेपनेन स्वयमेव द्रष्टास्थ यद्दिव्यलोके प्रचलति ।

(सिद्धपुरुषाद्गृहीतसिद्धाञ्जनेन विलिप्तनेत्राः सर्वा अत्यादरेण वीक्षन्ते)

**महेन्द्रः**—मन्त्रिवर्य! तर्हि तावदचिरात्सभां प्रवेशय ।

**मन्त्री**—यथाज्ञापयति प्रभुस्सुरपतिः (इति गत्वा पुनः प्रविशति) ।

(कमलाश्रीनाथौ महेन्द्रसभां प्रविशतः)

**श्रीनाथः**—भोस्त्रिलोकनाथ! सुरोत्तम! त्वां भूयो भूयोऽभिवादयेऽहं श्रीनाथः ।

**महेन्द्रः**—सकलत्रमत्र सौख्यभाजनं भूयाः ।

कमला—कमलापि शचीपतिमभिवादयति ।

महेन्द्रः—श्रीनाथप्रियापि शचीव सर्वदा पतिसहचरी भूयात् ।

उभे—महानयं प्रसादः, (सभामुद्दिश्य) अखिलान् ऋषिपुङ्गवान् मन्त्रिपुरस्सरान् सुरवरान् शचीमुख्या अमराङ्गनाश्च नमस्कुर्वः ।

सर्वे—छायाभान्वोरिव युवयोर्दांपत्यमभिवर्धताम् ।

महेन्द्रः—भो ! मन्त्रिन् ! अद्यैवानयोः कल्याणोत्सवघोरणीमत्र वीक्षितुमिच्छामः ।

मन्त्री—भो सुत्रामन् ! सकलपरिकरभूषितेयं सभा, ऋषिगणोऽप्यत्र सन्निहित एव, गन्धर्वैर्गानमारब्धम् । एतयोः कल्याणोत्सवप्रचलनाय, तवानुज्ञामेव सर्वे प्रतीक्षन्ते ।

महेन्द्रः—हे प्रिये ! इन्द्राणि ! सभाजय साध्वीं कमलाम् । श्रीनाथ ! अलंक्रियतां इदं रत्नसिंहासनम् ।

श्रीनाथः—यथा ज्ञापयति महेन्द्रः ।

(सिंहासनमधितिष्ठति)

शची—कमले ! इदं सिंहासनं श्रीनाथस्य पार्श्वे तवाश्रयं दातुमिच्छति ।

कमला—(सलज्जं) श्रीनाथस्य पार्श्वे उपविशति, मङ्गलवाद्यानि प्रचलन्ति, पुष्पवृष्टिः प्रादुर्भवति ।

सर्वे देवर्षयः—

भूयो भूयोऽत्रभूयो हितसुखमनयोर्दिव्यदांपत्यदीप्तचो-
भूयाद्भूयो न भूयो विरहशुचि मनाक् साधुशीलप्रपत्योः ।
भाग्यं दिव्यं प्रसादादमरगणपतेर्ज्ञाततद्वृत्तरीते-
श्श्रेयो भूयात्तदन्यैर्दुरधिगममिदं नित्यमस्मत्प्रसादात् ॥ २२

सर्वे—तथास्तु, तथास्तु !

**दम्पती**—अनुगृहीतौ स्वः ।

**शची**—

साधु भामिनि ! मोदकारिणि ! मङ्गलं तव सौख्यदम्
कान्तयोगजकान्तिमाप्नुहि शान्तिदायकचर्यया ।
फाललोचनवल्लभा हरिवल्लभा विधिवल्लभा
सन्ततं तवसन्ततेश्शुभसन्ततिं दिवि तन्वताम् ॥ २३ ॥

**सर्वे**—तथास्तु, तथास्तु ।

**कमला**—शरणागतासु एवमेव हि सज्जनानामाशंसा, धन्यास्मि दिवस्पतिप्रिये ! तवानुग्रहात् कृतार्थाऽस्मि ।

**महेन्द्रः**—श्रीनाथ !

भूलोके स्पृहणीयराज्यपदवी कीर्त्याऽनुभूता समं
देवानां सह भार्यया सुखमयी लब्धा त्वया सङ्गतिः ।
यावद्ब्रह्मपदं सुखं दिवि वसन् देवर्षिसंघैस्समं
नित्यानन्दविभूतिभाग्भव सखे यत्रैव दृश्यंमृषा ॥ २४ ॥

**सर्वे**—तथास्तु, तथास्तु ।

**श्रीनाथः**— भूयोऽप्यनुगृहीतोऽस्मि । महेन्द्र ! आश्रितजनेषु एवंविधपक्षपातः साधूनां सहज एव । त्वत्पादसेवकोऽहं सत्यं कृतार्थोऽस्मि । (सिद्धपुरुषः नेत्रे उन्मीलयति, सर्वाः पूर्ववत् स्वभावदृष्टयो भवन्ति) ।

**योगिनी**—अहह ! अहह ! निरन्तरतपश्चर्यापरायणानां योगिनामप्यसुलभा एषा महेन्द्रकृताशीः ।

**प्रभावती**—धन्योऽयं श्रीनाथः ; धन्या चास्मत्सखी कमला, एतयोर्दर्शनेन वयमपि धन्याः ।

सख्यः—भो सिद्धपुरुष! धन्यवादैस्त्वां सम्भावयामः।

सिद्धपुरुषः—योगिनि! प्रभावति! भगवतीसेवकाः! किमन्यदपेक्ष्यते।

सर्वाः—भगवन्! इदानीं साधुश्श्रीनाथः दिव्यसुखमनुभवति। तत्प्रियाऽस्मत्सखी कमला भर्तृसान्निध्यसन्तोषमनुभवति। प्राणिभिर्निर्विशेषं यत्सुखमपेक्ष्यते, तयोस्तत्प्राप्तिर्भूयादिति भगवता महेन्द्रेणाशीःकृता। सुरलोके प्रवृत्तं कल्याणं भवता योगदृष्ट्या वीक्षितं, अस्मभ्योऽप्यादरेण सन्दर्शितं। वयमद्य कृतार्थास्स्मः। सर्वं सुष्ठु साधितं। भो! महात्मन्! इतोऽपि किं प्राथ्यर्ते। तथापीदमस्तु भरतवाक्यम्—

कापट्यं विजहातु साधुजनता भूयात्स्वधर्मे रता
दाम्पत्यं मुदमेतु दीर्घशुभदं सत्यव्रतानामलम्।
अत्यन्तं सुखमेधतां मतिमतां सर्वं मतं मुक्तिदं
गैर्वाण्यां नवरीतिरञ्जितकृतिस्पर्धा कवीनश्श्वतात्॥२५॥

सिद्धपुरुषः—तथास्तु।

(सर्वे निष्क्रान्ताः)

इति पञ्चमोऽङ्कः.

---

रचितं सादरमेवं कमलाविजयेति नाटकं नव्यम्।
वेङ्कटरमणेनेदं साधूनां मानसप्रीत्यै॥
क्रैस्ते विंशे शतके नवमे वर्षेऽथ दशममासेऽस्मिन्।
द्वाविंशे दिवस इदं लिखितं पूर्णं महीसुरपुरेऽभूत्॥

(ओं तत्सत्.)

---

# एतन्नाटकस्थवृत्तपरिचयः

---

आदिमध्यावसानेषु य र ता यान्ति लाघवम् ।
भ ज सा गौरवं यान्ति म नौ तु गुरुलाघवौ ॥

गुरुः (–) लघुः (∪)

गणसंज्ञाः—

य गणः (∪––), र गणः (–∪–), त गणः (––∪),
भ गणः (–∪∪), ज गणः (∪–∪), स गणः (∪∪–),
म गणः (–––), न गणः (∪∪∪).

(प्राङ्निर्दिष्टसंख्याः तत्तद्वृत्तपादाक्षरद्योतकाः)

| अक्षराणि | वृत्तम् | लक्षणम् | प्रस्तारः | उदाहरणानि अङ्क | श्लोक |
|---|---|---|---|---|---|
| १ | श्रीः | गश्रीः | (–) | १ | ८ |
| २ | स्त्री | गौ स्त्री | (––) | १ | ९ |
| ३ | सुधीः | सुधीर्यः | (∪––) | १ | १० |
| ४ | कन्या | म्गौ चेत्कन्या | (––––) | १ | ११ |
| ५ | पङ्क्तिः | भ्गौ गिति पङ्क्तिः | (–∪∪––) | १ | १२ |
| ६ | शशिवदना | शशिवदना न्यौ | (∪∪∪∪––) | १ | १३ |
| ६ | विद्युल्लेखा | विद्युल्लेखा मो मः | (––––––) | ४ | २२ |
| ७ | कुमारललिता | कुमारललिता ज्स्गाः | (∪–∪∪∪––) | १ | १४ |

८ अनुष्टुप् (श्लोकः)—'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरु विजानीयादेतच्छ्लोकस्य लक्षणम् ॥' पूर्वार्धम्—(∪̲∪̲∪̲∪̲∪∪̲∪̲∪̲ ∪̲∪̲∪̲∪̲∪∪̲∪∪̲) एवमुत्तरार्धमपि । अं. १. श्लो. २, १८, २०, २१ २९, ४३ ; अं. ३. श्लो. ६, ८ ; अं. ५. श्लो. ५, ७, १३, १७.

८ विद्युन्माला—'मो मो गो गो विद्युन्माला' (––––––––) अं. ४. श्लो. १७, १८.

८ **प्रमाणिका**—'प्रमाणिका जरौ लगौ' (ᴗ–ᴗ–ᴗ–ᴗ–) अं. ४. श्लो. १६.

११ **इन्द्रवज्रा**—स्यादिन्द्रवज्रा ततजास्ततो गौ' (––ᴗ––ᴗᴗ–ᴗ––) अं. १. श्लो. १९, ३१, ४५, ४७; अं. ३. श्लो. ७; अं. ५. श्लो. ६, १४.

११ **उपेन्द्रवज्रा**—'उपेन्द्रवज्रा जतजास्ततो गौ' (ᴗ–ᴗ––ᴗᴗ–ᴗ––)

११ **उपजातिः**—'अनन्तरोदीरितलक्ष्मभाजः पादाश्च यासामुपजातयस्ताः' अं. १. श्लो. ४४; अं. २. श्लो. ३, १०; अं. ३. श्लो. ४, ५, ११; अं. ४. श्लो. २, १३; अं. ५. श्लो. ९.

११ **शालिनी**—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' (–––––ᴗ––ᴗ––) अं. १. श्लो. २३; अं. ५. श्लो. ८.

१२ **भुजङ्गप्रयातम्**—'भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः' (ᴗ––ᴗ––ᴗ––ᴗ––) अं. १. श्लो. ३०, ४०; अं. ४. श्लो. ९, १०.

१२ **द्रुतविलम्बितम्**—'द्रुतविलम्बितमाह नभौ भरौ' (ᴗᴗᴗ–ᴗᴗ–ᴗᴗ–ᴗ–) अं. १. श्लो २२.

१२ **स्रग्विणी**—'रैश्चतुर्भिर्युता स्रग्विणी सम्मता' (–ᴗ––ᴗ––ᴗ––ᴗ–) अं. ४. श्लो. १९.

१४ **वसन्ततिलका**—'उक्ता वसन्ततिलका तभजा जगौ गः' (––ᴗ–ᴗᴗᴗ–ᴗᴗ–ᴗ––) अं. १. श्लो. २६ (ए), ३९; अं. ४. श्लो. ७, ८.

१५ **मालिनी**—'ननमयययुतेयं मालिनी भोगिलोकैः' (ᴗᴗᴗᴗᴗᴗ–––ᴗ––ᴗ––) अं. १. श्लो. ३४; अं. ४. श्लो. ३; अं. ५. श्लो. ११.

१७ **मन्दाक्रान्ता**—'मन्दाक्रान्ताजलधिषडगा म्भौ नतौतोगुरूचेत्'(––––ᴗᴗᴗᴗᴗ– –ᴗ––ᴗ––) अं. ३. श्लो. १; अं. ४. श्लो. १४; अं. ५. श्लो. २.

१७ **शिखरिणी**—'रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणी' (ᴗ–––––ᴗᴗᴗᴗᴗ ––ᴗᴗᴗ–) अं. १. श्लो. २४, २८, ४२; अं. २. श्लो. १, २, ७; अं. ४. श्लो. २१; अं. ५. श्लो. १, २१.

१८ **करिणी**—'सनजा अपि नभसा शरयतिभिर्यदि करिणी' (⏑⏑–⏑⏑ ⏑⏑–⏑⏑⏑⏑–⏑⏑⏑⏑–) अं. १. श्लो. १५.

१८ **चित्रलेखा**—'मन्दाक्रान्ता नलघुपरयुता कीर्तिता चित्रलेखा' (––––– ⏑⏑⏑⏑⏑⏑– –⏑––⏑––) अं. १. श्लो. ४८.

१८ **हरिप्लुतम्**—'रात्सजौजभरा विदुर्वसुदिग्भिरत्र हरिप्लुतम्' (–⏑– ⏑⏑–⏑–⏑⏑–⏑–⏑⏑–⏑–) अं. २. श्लो. ६; अं. ५, श्लो. २३.

१९ **शार्दूलविक्रीडितम्** — 'सूर्याश्वैर्मसजास्ततस्सगुरवश्शार्दूलविक्रीडितम्' (–––⏑⏑–⏑–⏑⏑⏑–––⏑––⏑–) अं. १. श्लो. २६, ३८, ४६; अं. २. श्लो. ४, ८, ९; अं. ३. श्लो. १०; अं. ४. श्लो. १२, १५; अं. ५. श्लो. ३, १०, १६, १८, २४, २५.

२२ **स्रग्धरा**—'म्रभ्नैर्यानां त्रयाणां त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' (––– –⏑––⏑⏑⏑⏑⏑⏑––⏑––⏑––) अं. १. श्लो. १, १६, १७, २५, २७, ४१; अं. ३. श्लो. २, ३, ९; अं. ४. श्लो. १. ४, ५, ६, ११; अं. ५. श्लो. ४, १२, १५, १९, २०, २२.

**षोडशमात्रावृत्तम्**—'गुरुलघुयुक्तं पादे पादे षोडशमात्राक्लृप्तं वृत्तम्' अं. १. श्लो. ३. ४, ५, ६, ७, ३४ (ए), ३५, ३६, ३७.

**आर्या**—'यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश च द्वितीये चतुर्थके पञ्चदश सार्या' अं. १. श्लो. ३२, ३३. अं. २. श्लो. ५. अं. ५. श्लो. २६.

**गीतिः**—'आर्यापूर्वार्धसमं द्वितीयमपि भवति यत्र हंसगते । छन्दोविद्भिस्तदानीं गीतिंताममृतवाणि भाषन्ते ॥' (प्रथमतृतीयपादयोः १२ मात्राः, द्वितीयचतुर्थयोः १८ मात्राः) अं. ५. श्लो. २७.

**वियोगिनी**—'विषमे ससजा गुरुस्समे सभरा लोऽथ गुरुर्वियोगिनी ।' (⏑⏑–⏑⏑–⏑–⏑–) पा. १, ३; (⏑⏑––⏑⏑–⏑–⏑–) पा. २, ४. अं. ४. श्लो. २०.

---